सरस्वतीभवन - ग्रन्थमाला
[ १४४ ]

श्रीमदमरचन्द्रयतिविरचिता

# काव्यकल्पलतावृत्तिः

कुलपतेः प्रो रामभूर्तिशर्मणः प्रस्तावनया विभूषिता

सम्पादकः
डॉ. ददन - उपाध्याय





सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 144 ]

# KĀVYAKALPALATĀVṚTTIḤ

OF

## ŚRĪ AMARA CANDRA YATI

*FOREWORD BY*

**PROF. RAM MURTI SHARMA**

VICE-CHANCELLOR

*EDITED BY*

**DR. DADANA UPĀDHYĀYA**

**Assistant Editor**

Publication Institute

Sampurnanand Sanskrit University

Varanasi




V A R A N A S I

2 0 0 4

ISBN : 81-7270-087-3

*Research Publication Supervisor*—
**Director, Research Institute**
Sampurnanand Sanskrit University
Varanasi.





*Published by*—
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221 002.



*Available at*—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.



**First Edition,** 500 Copies

**Price** : Rs. 260.00



*Printed by*—
**Vijay Press**
Sarasauli, Bhojubeer
Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[ १४४ ]

श्रीमदमरचन्द्रयतिविरचिता

# काव्यकल्पलतावृत्तिः

कुलपतेः प्रो. राममूर्तिशर्मणः प्रस्तावनया विभूषिता

सम्पादकः

डॉ. ददन-उपाध्यायः

सहायक-सम्पादकः

प्रकाशनसंस्थानस्य

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी




वाराणस्याम्

२०६० तमे वैक्रमाब्दे १९२५ तमे शकाब्दे २००४ तमे खैस्ताब्दे

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः —*

**निदेशकः, अनुसन्धान-संस्थानस्य**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी।

ISBN : 81-7270-087-3



*प्रकाशकः—*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**

***निदेशकः, प्रकाशन-संस्थानस्य***

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी-२२१००२



*प्राप्ति-स्थानम्—*

**विक्रय-विभागः,**

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी-२२१००२



**प्रथमं संस्करणम्** – ५०० प्रतिरूपाणि

**मूल्यम्** – २६०.०० रूप्यकाणि



*मुद्रकः—*

**विजय प्रेस,**

सरसौली, भोजूबीर

वाराणसी।

# प्रस्तावना

अस्ति महतो हर्षप्रकर्षस्य विषयोऽयं यच्छ्रीमदमरचन्द्रयतिना विरचिता काव्यकल्पलतावृत्तिरमरत्वं प्राप्ता सहृदयहृदयान्तर्वर्त्तिलोकोत्तरवर्णनालक्षणकाव्यबीजं भावयन्ती प्ररोहयन्ती विकाशयन्ती कविकुलकुमुदानि उद्भेदयन्ती पूर्णचन्द्रिकेव विराजमाना विश्वविद्यालयादस्मात् प्रकाशतां प्राप्ता । तेनारिसिंहस्य कवितारहस्यात् कानिचित् सूत्राण्यादाय आत्मकृतं किञ्चित् सूत्रं संयोज्य वृत्त्यात्मकोऽयं ग्रन्थोः लिखितः । यथा तेनैवोद्घुष्टम्—

**सारस्वतामृतमहार्णवपूर्णिमेन्दो-**
**र्मत्वाऽरिसिंहसुकवेः कवितारहस्यम् ।**
**किञ्चिच्च तद्रचितमात्मकृतं च किञ्चिद्**
**व्याख्यायते त्वरितकाव्यकृतेऽत्र सूत्रम् ।।**

(का. वृ. १.१.२)

अरिसिंहामरचन्द्रयोरप्येक एव गुरुः श्रीजिनदत्तसूरिः । श्रीमदमरचन्द्रयतिः संन्यासी आसीदिति नामघटकीभूतयतिशब्देन प्रकाश्यते । एतस्मादेव कारणात् तेन स्वजन्मवंशस्योल्लेखः कोऽपि न कृतः स्वग्रन्थे ; किन्तु काव्यरूपैतत्प्रबन्धप्रदर्शनेनासंन्यस्तकर्मेति विज्ञायते । भवतु असंन्यस्तो यतिशब्दाभिधेयो भविष्यतीति नात्र विषये विशेषो विज्ञायते । गुर्जरप्रदेशस्य ढोलकराज्यस्य राणाधीरधवलस्याप्तसचिवस्य वस्तुपालस्य समकालीनत्वादस्यामरचन्द्रस्य कालः त्रयोदशशतकस्य मध्यभागे निश्चीयते ।

काव्यकल्पलतावृत्त्यतिरिक्ताः छन्दोरत्नावली-काव्यकल्पलतापरिमल-अलङ्कारप्रबोधादयोऽनेके ग्रन्था अस्य प्रथन्ते । संस्कृतसाहित्यशास्त्रस्याचार्याः काव्यस्य व्यावहारिकीं शिक्षां प्रदाय श्लाघनीयं रमणीयं प्रयत्नमकुर्वन् । एतद्विषयकाः ग्रन्थाः कविशिक्षाया नाम्ना विदिताः सन्ति । कविशिक्षाया आचार्याः राजशेखरः–क्षेमेन्द्रः–अरिसिंहः–अमरचन्द्रयति-देवेश्वरादिकाश्च प्रथितयशसः सन्ति साहित्यशास्त्रजगति ।

अतिप्राचीनकाले साहित्यशास्त्रमिदं क्रियाकल्पनाम्ना व्यवह्रियते स्म । अत्र क्रियया काव्यग्रन्थाः, कल्पेन च विधानमभिप्रेतम्, तेन क्रियाकल्पशब्देन काव्यकरणविधिः संसूच्यते । काव्यकरणविधिप्रतिपादकग्रन्थे लतात्वमारोप्य काव्यकल्पलतेति नामकरणं कृतम् । लताधर्मत्वात् प्रतानस्तबकावारोप्य विभागः कृतः । तेन काव्यकल्पलतायां चत्वारः प्रतानाः सन्ति । प्रथमे प्रताने छन्दःसिद्धिः वर्णिता, द्वितीये शब्दसिद्धिः ध्यातव्या, तृतीये श्लेषसिद्धिः, यत्र श्लेषस्य प्रपञ्चः, चतुर्थे चार्थसिद्धिः । प्रत्येकस्मिन् प्रताने अनेके स्तबकाः सन्ति । तेषां संख्या क्रमशः पञ्चभिः, चतुर्भिः, पञ्चभिः, सप्तभिश्च स्तबकैर्विस्तीर्णा । यथा तेनैव प्रतिपादितम्—

**चत्वारोऽत्र च्छन्दःशब्दश्लेषार्थसिद्धिनामानः ।**
**क्रमशस्तथा प्रतानाः पञ्चचतुष्पञ्चसप्तभिः स्तबकैः ।।**

(का. वृ. १.१.४)

एवं कविशिक्षाविषयिकीयमपूर्वा काव्यकल्पलतावृत्तिः समग्ररूपेण कवित्व-सम्पत्तये बहूपयुक्तास्तीति मे मतिः । एतादृशगुणगणविशिष्टा काव्यकल्पलतावृत्तिः श्रीमता **डॉ० ददन-उपाध्यायेन** प्रकाशनसंस्थानस्य सहायकसम्पादकेन सरस्वतीभवन-पुस्तकालयस्य १०२८१७ संख्यायाः हस्तलिखितपाण्डुलिप्याः सम्यग् पाठादिशोधनादि-प्रकारेण सम्पादिता । ग्रन्थस्यास्य सम्पादनवैशिष्ट्यमतिरमणीयमिति मे प्रतिभाति । डॉ० उपाध्यायानां सत्प्रयासेन परिश्रमेण चायमद्भुतं ग्रन्थरत्नं प्राकाश्यं प्राप्तमिति महान् अस्मभ्यं हर्षप्रकर्षः । एतदर्थं डॉ० उपाध्यायान् धन्यवादैराशीर्वचोभिः शुभाशंसाभिश्च वर्धापनं प्रदाय तस्य योगक्षेमार्थं भगवन्तं साम्बं विश्वनाथं प्रार्थये ।

ग्रन्थस्यास्य सुमनोहरप्रकाशनकर्त्रे प्रकाशनसंस्थानस्य निदेशकाय सहृदय-धुरीणाय विश्वविद्यालयसंस्कृतिसंस्कृतगौरववर्द्धनतत्पराय **डॉ० हरिश्चन्द्रमणित्रिपाठि-महाशयाय**, ईक्ष्यशोधनप्रवीणाय **डॉ० हरिवंशकुमारपाण्डेयाय**, ईक्ष्यशोधकाभ्यां **श्री अशोककुमारशुक्ल**-भाटियोपाह्व**श्रीअतुलकुमाराभ्यां** प्रकाशनसहायकाय **श्रीकन्हई-सिंहकुशवाहाय** पाण्डुलिपिसङ्ग्राहकसहायकाय **श्रीओमप्रकाशवर्मणे** प्रकाशन-संस्थानस्य डाटा-इन्ट्री-आपरेटरपदभाजाय **श्रीजितेन्द्रकुमाराय** पुष्कलान्याशीर्वचांसि सम्प्रयच्छन् सुष्ठु मनोहरमुद्रणतत्पराय विजय-प्रेससञ्चालकाय **श्रीगिरीशचन्द्रायापि** समुपहरामि मङ्गलान्याशीर्वचांसि ।

अन्ते ग्रन्थमिमं साम्बाय सान्नपूर्णाय श्रीविश्वनाथाय समर्प्य कामये यदयं ग्रन्थः विदुषां छात्राणां कवित्वबुभुत्सूनाञ्चोपकाराय स्यादिति ।

**वाराणसी**
फाल्गुनपूर्णिमा
२०५८ तमः विक्रमाब्दः ।

**राममूर्तिशर्मा**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# भावभूमिः

अहो ! संस्कृतसाहित्यस्य विभूतिः । या वयोवर्षिष्ठत्वेन महामहीखण्डमण्डलव्याप्तित्वेन दुष्परिच्छेदेन परिणामेन, निरतिशयेन वैभवेन, अनन्यतुल्येन सौन्दर्यप्रकर्षेण संस्कृतीतिवृत्तोपयोगिगुणेन च भाषान्तरसाहित्यवैभवमतिशेते । साहित्यमिदं पौरुषेयापौरुषेयभेदेन द्विविधम् । पौरुषेयमपि काव्यशास्त्रविभेदेन विभक्तं धीमतां विनोदाय पाटवाय च । काव्यानामपि शास्त्रतां साधयन्ति सुधियः, हितोपदेशकत्वात्, प्रवृत्तिनिवृत्तिकारित्वाच्च । काव्यशास्त्रमिदं काव्यालङ्कार-काव्यशास्त्र-क्रियाकल्प-साहित्यविद्या-अलङ्कारशास्त्र-साहित्यशास्त्रादिकतिपयनामभिः ससम्मानं सानुरागं च समाहूयते । संस्कृतभाषायाः साहित्यशास्त्रस्येतिहासः गुरुतमः । न कस्या अपि भाषायाः काव्यशास्त्रमद्यापि तज्जेतुं पारयति । भाषायामस्यां विरचिता आलङ्कारिकग्रन्थाः स्वसारशालितया विचारगभीरतया चेतरभाषाणां ग्रन्थान् सलीलं पराभवन्ति । अस्या भाषायाः काव्यशास्त्रीयग्रन्थेषु यद् व्यापकत्वं यद्गभीरत्वं यद्भिन्नार्थकत्वं यत्प्रकृष्टत्वं यन्निशितत्वं यदोजस्त्वं यत्सूक्ष्मत्वं यच्च कामधुक्त्वं विद्योतते न तत्कस्या अपि भाषाया आलङ्कारिकग्रन्थेषु दरीदृश्यते ।

## साहित्यशास्त्रस्योपादेयता

साहित्यशास्त्रशब्देन तत्साहित्याङ्गं विवक्षितं यत्र काव्यभेद-तत्स्वरूप-तद्गत-गुणदोषालङ्कारादीनां निरूपणं क्रियते । शास्त्रमिदं पौरुषेयापौरुषेयग्रन्थानां ज्ञानाय नितान्तमपेक्षितम् । अत एव साहित्यशास्त्रमपि शास्त्रान्तराणीव परमोपादेयं शास्त्रमस्ति । वैदिकानां लौकिकानाञ्च शास्त्राणां सर्वाङ्गीणतया ज्ञानं तावन्न भवितुमर्हति यावदलङ्कारशास्त्रस्य प्रागल्भ्यं न वर्तते । तत्र वेदवेदाङ्गादिषु अलङ्कारशास्त्रस्य महत्त्वमवलोकयन्तु विचक्षणाः । पुरा महर्षिविश्वामित्रः स्वानुयायिभिः शतद्रु-विपासानद्योः सङ्गममगच्छत् । तत्र तस्य हृदि नद्योस्तयोरुच्छ्वसितं जलमवलोक्य भावोद्रेकेन सहसा काव्यधारा प्रवाहिता–

**प्रपर्वतानामुशतीं उपस्थादश्वे इव विषितेहासमाने ।**
**गावेव शुभ्रे मातरारिहाणे विपाट्छुतुद्री पयासा जवेते ।।**

(ऋग्वेदः, ३/३३/१)

'गावेव' इत्यत्रोपमालङ्कारस्य चमत्कारितावलोक्यते । तत्र ऋग्वेदेऽलङ्कारतत्त्वस्यानेकान्युदाहरणानि दृष्टिगोचराणि भवन्ति । यथा–

**'उभ्रातेव पुंस एति प्रतीची गर्त्तारुगिव सनये धनानाम् ।**
**जायेव पत्य उशती सुवासा उषाहस्रेव विरिणीते अप्सः' ।।**

(ऋग्वेदे, १/१२४/७)

अत्र शृङ्गारवात्सल्यरसयोरभिव्यक्तिः, माधुर्यगुणस्योत्कर्षः, उपमालङ्कारस्य चमत्कारश्च दर्शनीयः । अनेन प्रकारेणैव–

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति[1] ।।**

मन्त्रेऽस्मिन् आत्म-परमात्म-प्रकृतिरिति त्रिभ्य उपमेयेभ्यः द्वा सयुजा सुपर्णाः पिप्पलमित्युपमानं कविना कृतम् । अत्रातिशयोक्त्यलङ्कारस्य छटा विद्योतत एव । अत्रालङ्कारमाध्यमेन सृष्टिविषयकदर्शनरहस्यानां समावेशो वर्तते । मन्त्रेऽस्मिन् जीवेश्वर-प्रकृतित्रयाणां नामपुरस्सरं नोक्त्वा रूपकालङ्कारस्य माध्यमेन जीवेश्वरौ 'द्वा सुपर्णा सयुजा सखाया' पक्षिणौ निरूपितौ । प्रकृतिश्च विशालवृक्षरूपेण चित्रिता । 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इत्यनेन तयोः पक्षिणोः मध्ये एकः जीवरूपः पक्षी वृक्षस्य फलानि सांसारिकसुखदुःखानि स्वकर्मानुसारं भुनक्ति । 'अनश्नन्नन्य अभिचाकषीति' द्वितीयः परमात्मरूपः खगः फलानां भोगमकुर्वन् 'अभिचाकषीति' जगति स्वसौन्दर्यं सर्वत्र प्रकाशयति । काव्यस्य मनोहारिण्या भाषया दार्शनिकतत्त्वानां निरूपणमीदृक् विश्व-साहित्येऽन्यत्र दुर्लभम् । अत्र न केवलं रूपक-अनुप्रास-विभावना-विशेषोक्ति-अतिशयोक्त्य-लङ्काराणां विभावनं भवति, अपि तु 'सयुजा, सखाया' इत्यनेन जीवात्मपरमात्मनोः नित्यतायाः सच्चिद्रूपतायाश्चाभिव्यक्तिर्भवति, तस्मात् पदद्योत्यध्वनेरुदाहरणं परि-पुष्णाति । सर्वमेतदलङ्कारशास्त्रं विनावगन्तुं न शक्यते ।

अत एव काव्यशास्त्रिषु राजशेखरेण **"उपकारकत्वादलङ्कारः सप्तम-मङ्गम् । ऋते च तत्स्वरूपपरिज्ञानाद् वेदार्थानवगतिः"**[2] इत्युक्त्वा वेदव्याख्यायै अलङ्कारशास्त्रस्य महत्त्वं प्रतिपादितम् । पण्डितराजजगन्नाथोऽप्यतिशयोक्तिप्रसङ्गे कथयति– 'इयं चातिशयोक्तिर्वेदेऽपि दृश्यते । यथा 'द्वा सुपर्णा........चाकषीति'[3] । सायणाचार्यो बहुशः 'तत्र दृष्टान्तः' इति निर्देशपूर्वकं मन्त्रान् व्याचष्टे । ऋषिणा दयानन्देन स्वकीये ऋग्वेदभाष्ये प्रायेण प्रतिमन्त्रानन्तरं श्लेष-उपमा-उत्प्रेक्षा-रूपक-व्यतिरेक-अतिशयोक्ति-प्रभृतयोऽलङ्कारा निर्दिष्टाः । लक्षणाव्यञ्जनादीन्यपराणि च काव्यतत्त्वान्यपि निरूपि-तानि । अलङ्कारशास्त्रस्य तत्त्वानां वेदे विद्यमानत्वाद् अन्यशास्त्रवदलङ्कारशास्त्रस्यापि वेदोपजीवकत्वं सिद्ध्यति ।

आग्नेये विष्णुधर्मोत्तरे पुराणे च काव्यतत्त्वानां विवेचनं समुपलभ्यते । त्रेतायुगे देवा ब्रह्माणमुपगम्य तं प्रार्थितवन्तो यत्तादृशस्य वेदस्य रचना विधेहि, येन शूद्रा अपि अनुशीलिताः सन्तो निःश्रेयसः भागिनो भवेयुरिति, एतन्निशम्य चतुर्भ्यो वेदेभ्यः सारमादाय

---

१. ऋग्वेदे, १.१६४.२० । २. का. मी., द्वि. अ., पृ० ६ ।
३. रसगङ्गाधरे, पृ० ४२१ ।

पञ्चमं नाट्यवेदं रचितवान् विधाता । तदेव भगवता नाट्याचार्येण भरतेन स्पष्टमुद्घोषितम्–

**जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च ।**
**यजुर्वेदादभिनयान् रसानाथर्वणादपि[१] ।।**

यायावरेण राजशेखरेण काव्यमीमांसायामलङ्कारशास्त्रस्य प्राचीनता प्रमाणिता । तदनुसारेण शास्त्रमेतदुपदिष्टवान् भगवान् शङ्करो ब्रह्मणे, तदनन्तरं तस्माद् देवादय ऋषयश्च शिक्षिताः । अष्टादशोपदेशकद्वारा चैतस्य शास्त्रस्याष्टादशाधिकरणेषु सञ्जाता । तत्र दृश्यकाव्यस्य निरूपणं भरतेन कृतम् । नन्दिकेश्वरेण रसस्य, धिषणेन दोषस्य, गुणस्य निरूपणं कृतमुपमन्युनेति । काव्यादर्शात्पूर्वं काश्यपवररुचिभ्यामलङ्कारग्रन्था निर्मिता इति तद्धृदयङ्गमानामकटीकातोऽवगम्यते । श्रुतानुपालिनीटीकायामपि दण्डिनः पूर्वालङ्कारिकेषु काश्यपब्रह्मदत्तनन्दस्वामिनां नामान्युद्धृतानि विद्यन्ते । परन्त्वेतैर्निर्मिता ग्रन्था नेदानीमुपलभ्यन्ते प्रेक्षकाणां समक्षम् । द्वितीयशताब्द्याः शिलालेखात् स्पष्टं ज्ञायते यदस्मिन् समयेऽलङ्कारशास्त्रस्योदयः समभूदेव । रुद्रदामन्शिलालेखे तु भाषालङ्कारपूर्णा नास्ति, परन्त्वलङ्कारशास्त्राणां कतिपयसिद्धान्तानां निर्देशस्तत्र विद्यत एव ।

व्याकरणशास्त्रस्य प्रवर्तकेन पाणिनिना 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः'[२] 'कर्मन्दकृशास्वादिनिः'[३] इति सूत्राभ्यां शिलालिकृशास्वद्वारा निर्मितनटसूत्रविषये निर्देशो विहितः । एतस्मात्पूर्ववर्तिना यास्काचार्येण स्वनिरुक्ते विविधोपमानां निरूपणमध्ये कर्मोपमायाः लक्षणं कृतम्–'यथा वासो यथा वनम्, यथा समुद्रं सृजति' (निरुक्ते, ५/७८/८) पूर्ववर्तिना गार्ग्येणापि उपमाया वैज्ञानिकं लक्षणमुपनिबद्धम्–उपमा यत् अतत् तत्सदृशम्' इति । अलङ्कारविषये बहून्युदाहरणानि प्रदर्शितानि सन्ति निरुक्ते । तदित्थमलङ्कारशास्त्रस्य प्राचीनता सुप्रतीतैव ।

## अलङ्कारशास्त्रस्याविर्भावः

भारतेऽलङ्कारशास्त्रस्योत्पत्तिविषयकः प्रश्नः जटिलः । अस्योत्पत्तिमधिकृत्य काव्यमीमांसाकारो राजशेखरो यामाख्यायिकां समुपस्थापयति, तेन ज्ञायते यत् श्रीकण्ठः परमेष्ठिवैकुण्ठादिभ्यश्चतुःषष्टये शिष्येभ्य उपदेशं चकार । कथनेनैतेन शास्त्रस्यास्याविर्भावो भगवतः शङ्कराद् बभूवेति प्रतीयते । काव्यसौन्दर्यस्याधायकानि यानि गुणरीतिध्वन्यलङ्कारादितत्त्वानि अलङ्कारशास्त्रं विविनक्ति, तानि सर्वाण्यपि मूलतो वेदेषु प्राप्तानि भवन्ति । वेदः स्वयमेव 'अमरकाव्यम्' 'पश्य देवस्य काव्यं न ममार न जीर्यति' ।

---

१. नाट्यशास्त्रम्, १.१७ । २. पा. सू० ४.३.११० । ३. पा. सू० ४.३.१११ ।

एवम्–'अग्निर्विश्वानि काव्यानि विद्वान्' (ऋ० ३/१/१८) "आदेवानामभवः केतुरग्ने मन्द्रोविश्वानि काव्यानि विद्वान्" (ऋ० ३/१/१७) एवम्–'तं गाथया पुराण्या पुनानभ्य-नूषत' (ऋ० १०/६/४३) अनेन साहित्यशास्त्रस्य जन्मदात्री श्रुतिमातैव सिद्ध्यति । वेदवेदाङ्गादिषु केवलं साहित्यशास्त्रस्य तत्त्वानि समुपलभ्यन्ते, न च तानि शास्त्राणि तत्र प्रत्यक्षतयाऽप्रत्यक्षतया वा तस्य शास्त्रीयं निरूपणं कुर्वाणानि दृष्टानि जायन्ते । तदीयं शास्त्रीयं निरूपणं तु भरतमुनिसमयात् प्रारब्धं भवति ।

## काव्यशास्त्राभिधानान्तराणि

स्वजन्मकालत एव शास्त्रमिदं नितरां लोकप्रियतामभजत् । तस्मादेतत् काव्यालङ्कार-काव्यशास्त्र-क्रियाकल्प-साहित्यविद्या-अलङ्कारशास्त्र-साहित्यशास्त्रादिकतिपयनामभिः ससम्मानं सानुरागञ्च समाहूतमभूत् ।

## काव्यालङ्कारः

काव्यशास्त्रस्य प्राचीनतमं नाम काव्यालङ्कार एवास्ति । काव्यशास्त्रस्यादिमे काले एतस्मै काव्यालङ्कारशब्दस्य प्रयोगो क्रियते स्म । एतस्मादेव कारणात् काव्य-शास्त्रस्यादियुगस्य सर्वे आचार्याः स्वग्रन्थानां नामानि काव्यालङ्कार इत्यकार्षुः । अलङ्कार-शास्त्रस्य प्रख्यात आचार्यो भामहः स्वग्रन्थस्य नाम काव्यालङ्कार इत्यकार्षीत् । रुद्रटोऽपि स्वकाव्यशास्त्रविवेचनात्मकस्य ग्रन्थस्य नाम काव्यलङ्कारसारसङ्ग्रह इत्यकरोत् । रुद्रटस्यापि काव्यशास्त्रविषयकस्य ग्रन्थस्य नाम काव्यलङ्कार एवास्ति ।

काव्यालङ्काराभिधानस्यालङ्कारशब्दः सौन्दर्यस्य बोधको वर्तते । अत एव काव्या-लङ्कारसूत्रनामके ग्रन्थे वामनेनोक्तम्–**'सौन्दर्यमलङ्कारः'**[१] इति । अन्यैरप्याचार्यैः काव्यस्य सौन्दर्याधायकं तत्त्वमलङ्कारशब्देन प्रतिपादितम् । उक्तञ्चापि दण्डिना–**'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते'**[२] इति । इत्थं काव्यालङ्कारशब्दः काव्यसौन्दर्यस्य बोध-कोऽस्ति । लक्षणया च काव्यसौन्दर्यपरं शास्त्रमभिधीयते । अत एव काव्यसौन्दर्यस्य परीक्षणमेतेषामेव ग्रन्थानामाधारेण क्रियते । एतेषु मौलिकग्रन्थेषु दोषगुणालङ्कारादीनां तत्त्वानां सन्निवेशो भवति ।

## अलङ्कारशास्त्रम्

परवर्तिन आचार्याः काव्यशास्त्रस्यार्थेऽलङ्कारशास्त्रशब्दस्य प्रयोगमकार्षुः । प्रताप-रुद्रीयस्य टीकायामस्य मतस्य समर्थनाय छत्रिन्यायस्याश्रयणं कृतं भवति । तेन लिखितम्–'यद्यपि रसालङ्काराद्यनेकविषयप्रतिपादकमिदं शास्त्रम्, तथापि छत्रिन्यायेना-लङ्कारशास्त्रमित्युच्यते' इदं तु मतं प्रतापरुद्रीयकारस्यास्ति । अलङ्क्रियतेऽनेनेति करणव्युत्पत्तिनिष्पन्नो यमकोपमादिबोधको नायमलङ्कारशब्दः,किन्तु 'अलङ्कृतिरलङ्कारः'

---

१. काव्यालङ्कारसूत्रे-१.१.२ । २. काव्यादर्शे, २.१ ।

इति भावव्युत्पन्नो दोषापगमगुणालङ्कारसंवलनकृतसौन्दर्यपरः, तत्प्रतिपादकत्वादेवास्यालङ्कारनाम्ना व्यपदेश इति । अत्र मानन्तु वामनस्य सूत्राणि–'काव्यं ग्राह्यमलङ्कारात्'[१] 'सौन्दर्यमलङ्कारः'[२] 'सदोषगुणालङ्कारहानोपादानाभ्याम्'[३] इत्यादीनि ।

## काव्यशास्त्रम्

काव्यस्य सर्वेषामुपकरणानां तत्त्वानां शासनं शास्त्रीयविवेचनमस्मिन् शास्त्रे प्राधान्येन भवति, तेन काव्यशास्त्रमिति व्यपदिश्यते । एकादशशताब्दस्य सरस्वतीकण्ठाभरणकारो भोजदेवोऽस्मै शास्त्राय मुख्यरूपेण काव्यशास्त्रस्य प्रयोगं कृतवान् ; किन्तु शास्त्रशब्दस्य व्युत्पत्तिमयं विधिप्रतिषेधपरामाह । तथा चोक्तं तेन–

**यद्विधौ च निषेधे च व्युत्पत्तिरेव कारणम् ।**
**तदध्येयं विदुस्तेन लोकयात्रा प्रवर्तते[४] ।।**

(स० क० २/१३८)

तयोर्विधिप्रतिषेधयोः साधनानि त्रीणि सन्ति–काव्यम्, शास्त्रम्, इतिहासश्च । एतेषां त्रयाणां मिश्रणेन त्रीण्यपराण्यपि जायन्ते साधनानि–काव्यशास्त्रम्, काव्येतिहासः, शास्त्रेतिहासश्च । इत्थमाहत्य भवन्ति षट् साधनानि विधिप्रतिषेधबोधकानि । तथा चोक्तं भोजदेवेन सरस्वतीकण्ठाभरणे–

**काव्यं शास्त्रेतिहासौ च काव्यशास्त्रं तथैव च ।**
**काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम्[५] ।।**

अत एव भोजदेवः काव्यशास्त्रस्य प्रमुखं प्रयोजनं कान्तासम्मिततयोपदेश एव मन्यते ।

## साहित्यशास्त्रम्

यद्यपि साहित्यशब्दो वाङ्मयार्थे प्रयुज्यते, तथापि काव्यस्वरूपमर्थः सङ्कोचकृतो वेद्यः । सहितयोर्भावः साहित्यम्, तच्च साहित्यं शब्दार्थयोः क्वचिदन्यत्र शास्त्रे न भवति, किन्तु काव्यशास्त्र एव । तत्र हि शब्दोऽर्थश्च इत्युभयं मिलितं सदेव कमपि आह्लादं जनयति । वक्रोक्तिजीवितकारेणोक्तम्–

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनी ।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणी[६] ।।**

---

१. का० सू०-१.१.१ । २. तदेव १.१.२ । ३. तदेव १.१.३ ।
४. स० क० २.१३८ । ५. तदेव, २.१३९ । ६. वक्रो० १.७ ।

अन्यत्रापि तेनैव साहित्यशब्दस्याभिप्रायमभिव्यञ्जयता प्रोक्तम्–

**साहित्यमनयोः शोभाशालितां प्रति काप्यसौ ।**
**अन्यूनमतिरिक्तत्वमनोहारिण्यवस्थितिः[१] ।।**

अपि च राजशेखरेण 'पञ्चमी साहित्यविद्येति यायावरीयः' अन्यदपि 'शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या' इति काव्यमीमांसायामुक्तम् । साहित्यदर्पणादिककाव्यलक्षणस्वरूपादिबोधकलक्षणग्रन्थानां नामकरणमपि विद्यान्तरव्यावृत्तकाव्यमात्रवाचकस्य साहित्यशब्दस्य प्रयोगं प्रमाणयति । तदित्थं साहित्यशब्दोऽत्र काव्यमात्रपरक इत्यवबोध्यम् ।

## साहित्यविद्या

काव्यमीमांसानामकस्य ग्रन्थस्य प्रणेताऽऽचार्यो राजशेखरः काव्यशास्त्रं साहित्यविद्याशब्देनाभिहितवान् । तथा चोक्तं तेन काव्यमीमांसायाम्–'पञ्चमी साहित्यविद्येति यायावरीयः' इति ।

## क्रियाकल्पः

उपर्युक्तानि सर्वाणि नामानि काव्यशास्त्रस्य तत्र यद्यपि संस्कृतसाहित्ये समुपलभ्यन्ते, किन्तु एतेभ्यः सर्वेभ्यः प्राचीनं नामास्ति क्रियाकल्प इति । अस्य निर्देशो वात्स्यायनस्य कामशास्त्रे परिगणितासु चतुष्षष्टिकलासु समुपलभ्यते । काव्यक्रियाकल्पस्य सङ्क्षिप्तं नामाभाति इदम् । वाल्मीकीयरामायणस्योत्तरकाण्डस्य चतुर्नवतितमे सर्गेऽपि क्रियाकल्पशब्दस्य काव्यवित्पदस्य च प्रयोगः समुपलभ्यते, तद्यथा–

**क्रियाकल्पविदश्चैव तथा काव्यविदो जनान्[२] ।**

तत्र काव्यवित्पदस्यार्थो भवति काव्यरसग्रहणचतुरः पुरुषः । किन्तु क्रियाकल्पशब्दस्यार्थोऽस्ति काव्यसौन्दर्यपरीक्षणसमर्थः पुरुषः । प्रस्तुतसमीक्ष्यग्रन्थस्य नामापि क्रियाकल्पशब्देनैव लतात्वमारोप्य काव्यकल्पलतावृत्तिरिति अभिहितम् । क्रियाकल्प इति काव्यकरणविधिः काव्यालङ्कार इत्यर्थः मिलति ललितविस्तरस्य जयमङ्गलाटीकायाम् ।

अनेन प्रकारेण काव्यशास्त्रस्य नामरूपेण निम्नाङ्किताः षट् शब्दाः समुपलभ्यन्ते–काव्यालङ्कारः, अलङ्कारशास्त्रम्, काव्यशास्त्रम्, साहित्यशास्त्रम्, साहित्यविद्या, क्रियाकल्पश्च ।

---

१. वक्रोक्ति०, १.१७ । २. वा० रा० ७.९४.७ ।

## अलङ्कारशास्त्रस्य कालविभागः

यद्यपि वैदिककालादारभ्य पाणिनेः कालपर्यन्तमपि काव्यस्य तत्त्वानां विवेचनं तत्र तत्र समुपलभ्यते, किन्तु तत्र काव्यशास्त्रस्य स्थितिः सुस्पष्टा नासीत् । वेदः स्वयमेव 'अमरकाव्यम्' इत्यनेन नाम्ना भुवनप्रथितः–'देवस्य पश्य काव्यं न ममार न जीर्यति' । अतोऽलङ्कारशास्त्रस्यापि जन्मभूमिः वेद एव । इदन्त्ववश्यं वेदवेदाङ्गेषु केवलमलङ्कारशास्त्रस्य तत्त्वानि समुपलभ्यन्ते, न च शास्त्रीयं निरूपणं तत्रावलोक्यते । तदीयं शास्त्रीयं निरूपणं तु भरतमुनिसमयात् प्रारब्धं भवति । भरतमुनेः कालः विक्रमपूर्वद्वितीयं शताब्दमारभ्य द्वितीयशताब्दं यावत् स्वीक्रियते । अत एव विक्रमपूर्वस्माद् द्वितीयशताब्दादारभ्य अष्टादशशताब्दं यावत् काव्यशास्त्रस्य निर्माणं सञ्जातम् । अयमेव काव्यशास्त्रसाहित्यस्य प्रसरस्य कालः स्वीकर्तुं शक्यते ।

अलङ्कारशास्त्रस्य कालस्य विभागं विद्वांसः चतुर्षु भागेषु कुर्वन्ति । तद्यथा–

१. **प्रारम्भिकः कालः–** अज्ञातकालाद् भामहपर्यन्तम् ।

२. **रचनात्मकः कालः–** भामहादारभ्य आनन्दवर्द्धनाचार्यपर्यन्तम् ।

३. **निर्णयात्मकः काल–** आनन्दवर्द्धनाचार्यादारभ्य मम्मटस्य कालं यावत् ।

४. **व्याख्याकालः–** मम्मटकालादारभ्य पण्डितराजजगन्नाथकालं यावत् ।

एतेषां चतुर्णामपि कालानां विवेचनं सङ्क्षेपेणात्र क्रमशः प्रस्तूयते–

१. **प्राम्भिकः कालः–** काव्यशास्त्रस्य कालेषु कालोऽयं सर्वप्रथमो मन्यते । अयं कालः अज्ञातकालादारभ्य सप्तमं शताब्दं यावत् स्वीक्रियते । अस्मिन् काले द्वावेवालङ्कारशास्त्रस्य प्रमुखावाचार्यौ सञ्जातौ–आचार्यो भरतः, भामहश्च । भरतानन्तरं मेधाविरुद्रप्रभृतयः कतिपये आचार्या अजायन्त, परं न तेषां ग्रन्था उपलभ्यन्ते । तत्र भरतमुनिना प्रणीतं नाट्यशास्त्रं काव्यशास्त्रस्य प्राचीनतमो ग्रन्थो वर्तते । ग्रन्थेऽस्मिन् आचार्यो भरतः विस्तरेण काव्यशास्त्रस्य तत्त्वानां विवेचनमकार्षीत् ।

आचार्यभामहप्रणीतस्य ग्रन्थस्य नाम काव्यालङ्कारोऽस्ति । यद्यपि नाट्यशास्त्रं नाट्यमेवाश्रित्य प्रवृत्तमस्ति, किन्तु काव्यालङ्कारस्तु शुद्धरूपेण काव्यस्य तत्त्वानां सम्यग् विवेचनं प्रस्तौति । षट्त्रिंशत् सप्तत्रिंशद्वाध्यायात्मकस्य नाट्यशास्त्रस्य षोडशेऽध्याये चतुर्णामलङ्काराणां दशगुणानां दशदोषाणां च विवेचनं समुपलभ्यते । किन्तु काव्यालङ्कारग्रन्थे आचार्यो भामहोऽष्टात्रिंशत्सङ्ख्याकानां स्वतन्त्राणामलङ्काराणां विवेचनं प्रस्तौति ।

२. **रचनात्मकः कालः–** अयं काव्यशास्त्रस्यातीव महत्त्वपूर्णो द्वितीयः कालो वर्तते । षट्शतकवैक्रमाब्दादारभ्य अष्टशतकवैक्रमाब्दं यावत् कालस्यास्य प्रसरो विद्यते । अस्मिन् रचनात्मक एव काले काव्यशास्त्रस्य चतुर्णां सम्प्रदायानां मौलिकग्रन्थानां निर्मितिः सञ्जाता । ते च काव्यशास्त्रस्य सम्प्रदायाः सन्ति–

१. अलङ्कारसम्प्रदायः, २. रीतिसम्प्रदायः, ३. रससम्प्रदायः, ४. ध्वनिसम्प्रदायश्च । एतेषां समेषां सम्प्रदायानां मौलिकग्रन्थानां निर्मातारः अस्मिन्नेव काले समुत्पन्ना अभूवन् । तथा हि–

१. अलङ्कारसम्प्रदायस्य प्रवर्तकाः– भामहोद्भटरुद्रटाः ।

२. रीतिसम्प्रदायस्य प्रवर्तकौ– दण्डिवामनौ ।

३. रससम्प्रदायस्य प्रवर्तकाः– लोल्लट-शङ्कुक-भट्टनायकादिकाः ।

४. ध्वनिसम्प्रदायस्य प्रवर्तकः– आचार्य आनन्दवर्द्धनः ।

काव्यशास्त्रस्य दृष्ट्या कालोऽयमतीव महत्त्वपूर्णो वर्त्तते । यदि भामहरुद्रटोद्भटादिकाः काव्यस्य बाह्यानां तत्त्वानामुन्मीलनमकुर्वन्, दण्डिवामनादिका अन्ये आचार्याः काव्यस्यात्मतत्त्वस्य निरूपणमकुर्वन् ।

**३. निर्णयात्मकः कालः–** कालोऽयमष्टशतकवैक्रमाब्दादारभ्य सहस्रवैक्रमाब्दं यावत् स्वीक्रियते । अस्मिन् काले आनन्दवर्धनाचार्यस्यानन्तरं मम्मटाचार्यस्य कालं यावद् ये आचार्या सञ्जाताः, ते सर्वे गण्यन्ते । कालस्यास्य प्रख्याता आचार्या अभूवन् ध्वन्यालोकलोचनस्याभिनवभारत्याश्च निर्माताभिनवगुप्तपादाचार्यः, वक्रोक्तिजीवितस्य प्रणेता कुन्तकः, व्यक्तिविवेकस्य रचयिता ध्वनिविरोध्याचार्यो महिमभट्टः । आचार्यः कुन्तको वक्रोक्तिसम्प्रदायस्य संस्थापक आचार्यो वर्तते । व्यक्तिविवेकाभिधाने ग्रन्थे आचार्यो महिमभट्टो ध्वनिसिद्धान्तस्यामूलचूडं खण्डनमकार्षीत् । अस्य कालस्याचार्या आसन् उद्भटः, भोजराजः, धनिकः, धनञ्जयश्च ।

**४. व्याख्यात्मकः कालः–** अस्य कालस्य प्रसारोऽतीव व्यापको वर्त्तते । सहस्रशतकवैक्रमाब्दादारभ्य सार्द्धसप्तदशशतकवैक्रमाब्दं यावत् सार्द्धसप्तशतवर्षाणां महान् कालः कालेऽस्मिन्नन्तर्भवति । अस्य कालस्याचार्याः हेमचन्द्रविश्वनाथजयदेवादिकाः साहित्यस्य सर्वाङ्गाणि समीचीनतया वर्णयामासुः प्रतिपादयामासुश्च । किन्तु रुय्यकः, अप्पयदीक्षितप्रभृतयः आलङ्कारिकाः केवलमलङ्काराणामेव विवेचनमकार्षुः । शारदातनयः, शिङ्गभूपालः, भानुदत्तप्रभृतयो विवेचकाः सिद्धान्तस्यास्य विवेचने श्लाघनीयं प्रयत्नमकुर्वन् । रूपगोस्वामी दिशायामस्यां यः प्रयत्नं कृतवान् सोऽपि श्लाघनीयः । राजशेखर-क्षेमेन्द्र-अमरचन्द्रादिका आलङ्कारिकाः कविशिक्षामाश्रित्य स्वस्वग्रन्थानां प्रणयनं कृतवन्तः ।

प्रकारान्तरेणापि साहित्यशास्त्रस्य कालविभागं कर्तुं शक्यते–

**१. पूर्वध्वनिः कालः–** अज्ञातकालादारभ्याष्टशतकवैक्रमाब्दं यावत् । अज्ञातकालादारभ्यानन्दवर्द्धनस्य कालं यावदिति भावः ।

**२. ध्वनिकालः–** आनन्दवर्द्धनादारभ्य मम्मटकालं यावत् । अष्टशतकवैक्रमाब्दादारभ्य सहस्रवैक्रमाब्दं यावत् ।

**३. पश्चाद्ध्वनिकालः–** मम्मटादारभ्य पण्डितराजजगन्नाथं यावत्। सहस्रवैक्रमाब्दारभ्य सार्द्धसप्तदशशतकवैक्रमाब्दं यावत्।

अस्य विभागस्य प्रवर्तकाः ध्वनेरेव प्राधान्यं स्वमनसि आकलयन्ति । तेषां मतानुसारेण ध्वनिसिद्धान्त एव साहित्यशास्त्रस्य सर्वप्रधानः सिद्धान्तो वर्त्तते ।

सम्प्रदायदृष्ट्यापि अस्य कालस्याचार्याणां विवेचनं कर्तुं शक्यते, तद्यथा–

**१.अलङ्कारसम्प्रदायस्याचार्याः–** भामहेन प्रवर्तितोऽप्यलङ्कारसम्प्रदायस्तद्ग्रन्थव्याख्यातृभिः रुद्रटोद्भटादिभिरेव स्थिरतां प्रापितः । काव्येऽलङ्कारस्य प्राधान्यमपि येन केनापि रूपेण दण्डिनोऽपि स्वीकृतमासीदेव । एतत्सम्प्रदायानुसारिणां मते अलङ्कारा एव काव्यजीवातवः । अलङ्काररहीनं काव्यस्वीकरणं तथैवोपहासास्पदं यथोष्णतारहितमग्निस्वीकरणम् । एतदेवोक्तं पीयूषवर्षजयदेवेन–

**अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती ।**
**असौ न मन्यते कस्मादनुष्णमनलङ्कृती[१] ।।**

पण्डितराजो जगन्नाथो विश्वेश्वरभट्टादिकाश्च सम्प्रदायस्यास्याचार्याः ।

**२. ध्वनिसम्प्रदायस्याचार्याः–** मम्मटः, रुय्यकः, विश्वनाथः, हेमचन्द्रः, विद्याधरः, विद्यानाथादयश्च ।

**३. रससम्प्रदायस्याचार्याः–** शारदातनयः, शिङ्गभूपालः, भानुदत्तः, रूपगोस्वाम्यादिकाश्च ।

**४. कविशिक्षाया आचार्याः–** राजशेखरः, क्षेमेन्द्रः, अरिसिंहः, अमरचन्द्रः, देवेश्वरादिकाश्च ।

अलङ्कारनिबन्धकर्तारः प्राचीना अर्वाचीनाश्चाचार्या बहवो हि सञ्जाताः । तद्यथा भरत-महर्षिव्यास-भट्टि-भामह-दण्डी-उद्भट-वामन-रुद्रट-भोजराज-मम्मट-रुय्यक-शोभाकरमित्र-अमृतानन्दयोगी-जयदेव-जयरथ-द्वितीयवाग्भट-विश्वनाथ-केशवमिश्र-अप्पयदीक्षित-जगन्नाथप्रभृतयः ग्रन्थकर्तारः सन्ति । अन्ये च मेधावी-श्रीमत्स्थविर-आनन्दवर्धन-राजशेखर-मुकुलभट्ट-प्रतीहारेन्दुराज-भट्टतौत-भट्टनायक-कुन्तक-अभिनवगुप्त-धनञ्जय-धनिक-राजानक-महिमभट्ट-क्षेमेन्द्र-नमिसाधु-सागरनन्दी-हेमचन्द्र-वाग्भट्ट-रामचन्द्र-गुणचन्द्र-अरिसिंह-शारदातनय-देवेश्वर-विद्याधर-विद्यानाथ-शिङ्गभूपाल-भानुदत्तमिश्र-रूपगोस्वामी-कविकर्णपूर-कविचन्द्र-आशाधरभट्ट-नरसिंहकवि-विश्वेश्वरपण्डित-अच्युतरायप्रभृतयोऽलङ्कारनिबन्धकर्तारः सन्ति । एतेषामाचार्याणां समयादिनिरूपणे भावभूमेः कलेवरं स्थूलतां न भजेत्, तस्मात् समीक्ष्यग्रन्थस्य कर्तुः कालविषय एव किञ्चिदत्र प्रस्तूयते ।

---

१. चन्द्रा० १.८ ।

## अमरचन्द्रयतिः

अमरचन्द्रयतेः काव्यकल्पलतावृत्तिरस्ति कविशिक्षाविषयकोऽयमपूर्वो ग्रन्थः । केचन अरिसिंह-अमरचन्द्रयोः सम्मिलिता रचनेयमिति मन्यन्ते । किन्तु ग्रन्थस्यावलोकनेनास्याः सूचना कुत्रापि न प्राप्यते । ग्रन्थस्य पुष्पिकाया अवलोकनेन ज्ञायते यदयमरचन्द्रयतिः जिनदत्तस्य शिष्य आसीत् । अन्तःसाक्ष्येनापि पित्रोर्नामास्य ज्ञातं न भवति । जैनसम्प्रदायस्य यतित्वे सम्प्राप्ते तेन स्वकीयपूर्वसम्बन्धस्योल्लेखो न कृतः ।

## अमरचन्द्रस्य कालः

अरिसिंहकृतकवितारहस्यसूत्रोक्तमधिकमंशं गृहीत्वा तदुपरि वृत्तिं निर्माय सोऽयममरचन्द्रः काव्यकल्पवृत्तिमरचयत् । अरिसिंहामरचन्द्रयोरुभयोरप्येक एव गुरुः जिनदत्तः आसीत् । केचन सुकविसङ्कीर्तनग्रन्थस्य कर्तृत्वमपि अरिसिंहामरचन्द्रयोः स्वीकुर्वन्ति । केचन कथयन्ति यत् काव्यकल्पलताया अंशतो निर्माणं तु अरिसिंहोऽकरोत्, किन्त्वस्य ग्रन्थस्य पूर्णता तु अमरचन्द्रेणैव विहिता । अमरचन्द्र एवास्य वृत्तिमपि लिलेख । अरिसिंहस्य पितुर्नाम लावण्यसिंहः आसीत् । अयं गुर्जरप्रदेशस्य ढोलकराज्यस्य रणधीरधवलस्याप्तसचिवस्य वस्तुपालजैनस्य मित्रमासीत् । अस्य वस्तुपालस्य प्रशंसायामनेन सुहृत्सङ्कीर्तननामकं काव्यमपि प्रणीतम् । धीरधवलवस्तुपालयोः समयः त्रयोदशख्रीष्टाब्दः मन्यते । अतः अमरचन्द्रस्यापि समयः त्रयोदशशतकस्य मध्यभाग एव भवितुमर्हति ।

## अमरचन्द्रस्य कृतयः

काव्यकल्पलतावृत्तौ स्वयं ग्रन्थकारेण स्थाने स्थाने छन्दोरत्नावली-काव्यकल्पलतापरिमल-अलङ्कारप्रबोधानां नामोल्लेखः कृतः । काव्यकल्पलतायाः महाराष्ट्रीयभाषाटीकां कुर्वता पण्डितप्रवरेण वामनशास्त्रिणा द्रौपदीस्वयंवरस्योल्लेखः अमरचन्द्रस्य कृतित्वेन कृतः । अस्य कृतित्वेन बालभारतस्याप्युल्लेखः प्राप्यते । डॉ० श्यामसुन्दरदासदीक्षितप्रभृतयो विद्वांसः अस्यामरचन्द्रस्य त्रयोदशसंख्याकाः ग्रन्थाः स्वीकुर्वन्ति । ते च सन्ति–छन्दोरत्नावली, काव्यकल्पलतापरिमलः, अलङ्कारप्रबोधः, बालभारतम्, पद्मानन्दः, सुकृतसङ्कीर्तनम्, चतुर्विंशतिजिनेन्द्रसङ्क्षिप्तचरितानि, स्यादिशब्दसमुच्चयः, कलाकलापः, सूक्तावली, काव्यकल्पलता कविशिक्षा वा, काव्यकल्पलतावृत्तिश्च ।

## काव्यकल्पलतावृत्तिः

ग्रन्थस्यास्य पुष्पिकायाममरचन्द्रयतिः स्वयं कथयति यदमरचन्द्रविरचितायां काव्यकल्पलताशिक्षावृत्ताविति । तेनानुमीयते यत् काव्यकल्पलतोपरि रचिता कविशिक्षावृत्तिरेव सम्प्रति काव्यकल्पलतावृत्तिनाम्नावबोध्यते । कविशिक्षाविषयकोऽयमपूर्वो ग्रन्थः । काव्यकरणाभ्यासे समुत्पद्यमानकाठिन्यदोषान् दूरीकर्तुं विस्तृतं प्रकाशं वितरति ग्रन्थोऽयम् । काव्यकल्पलतावृत्तौ चत्वारः प्रतानाः सन्ति । प्रत्येकस्मिन् प्रताने अनेके

स्तबकाः सन्ति। एतेषां प्रतानानां विषयाः क्रमशो निम्नप्रकारेण वर्णिताः सन्ति– १. छन्दसिद्धिः, २. शब्दसिद्धिः, ३. श्लेषसिद्धिः, ४. अर्थसिद्धिश्च। काव्यरचनायै ग्रन्थोऽयमतीवोपयोगी वर्त्तते।

जानन्त्येव विद्वांसो यदतिप्राचीनकाले साहित्यशास्त्रमिदं क्रियाकल्पनाम्ना व्यह्नियते स्म। वात्स्यायनेन कामसूत्रे चतुष्षष्टिकलासु क्रियाकल्पस्य गणना कृता। 'ललितविस्तर'नाम्नि बौद्धग्रन्थे कलानां गणनाप्रसङ्गे क्रियाकल्पस्यापि गणनास्ति। अस्यैव जयमङ्गलाटीकायाम्–'क्रियाकल्प इति काव्यकरणविधिः काव्यालङ्कार इत्यर्थः' लिखितमस्ति। आचार्यदण्डिनाऽपि स्वकाव्यादर्शे 'वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम्'[१] इत्युक्तः। क्रियाविधिशब्दे क्रियाशब्दस्य काव्यक्रियार्थे प्रयोगो महाकविना कालिदासेनापि समर्थितोऽस्ति। तद्यथा–'प्रथितयशसां भास-सौमिल्लककविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां बहुमानः'[२]। अनेन ज्ञायते यत् क्रिया-कल्पस्य तात्पर्यं काव्यरचनायाः प्रक्रिया एवास्ति। अत्र क्रियया काव्यग्रन्थाः, कल्पेन च विधानमभिप्रेतम्, तदिदं क्रियाकल्पपदं काव्यनिर्माणशिक्षाप्रदायकं ग्रन्थपरं पर्यवस्यति। यथालङ्कारशास्त्रप्रणेतारः अलङ्कारं जीवातुभूतं मत्वा स्वग्रन्थस्य नाम अलङ्कारनाम्ना कृतवन्तः, तथैव समीक्ष्यग्रन्थस्य कर्त्रा श्रीमदमरचन्द्रयतिनापि स्वग्रन्थस्य नाम क्रियाकल्पव्याख्यापरे ग्रन्थे लतात्वमारोप्य काव्यकल्पलता नामाकारि। तदुपरि कृता वृत्तिः काव्यकल्पलतावृत्तिरिति समीचीनमेव प्रतिभाति। स्वयं ग्रन्थकारेणापि सुष्ठु भणितम्–

**चत्वारोऽत्र च्छन्दःशब्दश्लेषार्थसिद्धिनामानः।**
**क्रमशस्तता प्रताना पञ्चचतुष्पञ्चसप्तभिः स्तबकैः[३]॥**

.......इत्येते लता विस्तीर्णा लताधर्मत्वात् प्रतानस्तबकारोपा। क्रमेण स्तबकानां नामान्याह–

**अनुष्टुप्छासनं छन्दोऽभ्यासः सामान्यशब्दकः।**
**वादो वर्ण्यस्थितिः पूर्वप्रताने स्तबका मताः॥**
**रूढयौगिकमिश्राख्या यौगिकाह्वानमालिका।**
**अनुप्रासो लाक्षणिको द्वितीये स्तबकाः स्मृताः[४]॥**
**श्लेषव्युत्पादनं सर्ववर्णनोद्दिष्टवर्णने।**
**अद्भुतं चित्रमित्येते तृतीये स्तबकाः कृताः॥**
**तुर्ये पुनरलङ्काराभ्यासवर्ण्याकृतिक्रियाः।**
**प्रकीर्णकाभिधः संख्यासमस्ये स्तबकाः स्थिताः॥**

---

१. काव्या०-१.९। २. का० ग्र०, (मालविका०) पृ० २३९।
३. का०वृ०१.१.७। ४. का० वृ० १.१.५-८।

अतः परं काव्यकल्पलतावृत्तेः वैशिष्ट्यं कतिभिः शब्दैः प्रतिपाद्यते । स्वयं मङ्गलश्लोकैरगर्हिताभीष्टसिद्धिरूपं समुचितवाग्देवतानमस्कारात्मकं मङ्गलं साधिकारिविषयसम्बन्धप्रयोजनरूपानुबन्धचतुष्टयं शिष्यशिक्षायै ग्रन्थस्य समग्रस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमतं ग्रन्थतो निबध्नन् ग्रन्थविषये ब्रवीति–

**विमृष्य वाङ्मयं ज्योतिरमरेण यतीन्दुना ।**
**काव्यकल्पलताख्येयं कविशिक्षा प्रतन्यते ।।**
**सारस्वतामृतमहार्णवपूर्णिमेन्दोः**
**मत्वाऽरिसिंहसुकवेः कवितारहस्यम् ।**
**किञ्चिच्च तद्रचितमात्मकृतं च किञ्चिद्**
**व्याख्यायते त्वरितकाव्यकृते च सूत्रम् ।।**
**वाचं नत्वा महानन्दकरसत्काव्यसम्पदे ।**
**कविशिक्षामिमां वच्मि काव्यकल्पलताह्वयम्[१] ।।**

एभिर्मङ्गलश्लोकैः सहृदयः कविरधिकारी सत्काव्यप्रवृद्धिकृत्कविशिक्षा विषयः प्रतिपाद्यप्रतिपादकभावसम्बन्धः, सत्काव्यसमृद्धिः कवित्वाविर्भावो वा प्रयोजनम् । अनेन प्रकारेण ग्रन्थप्रवृत्तिप्रयोजकज्ञानविषयत्वरूपोऽनुबन्धः स्पष्टीकृतः । सत्काव्ये सत्त्वमदोषत्वगुणवत्त्वं क्वचित् सालङ्कारत्वादि । आनन्दः सुखम्, तत्र महत्त्वं निरतिशयत्वम्, तच्च विगलितवेद्यान्तरसम्पर्कशून्यत्वम् । एवञ्च ब्रह्मानन्दसहोदरो रसः, 'रसो वै सः'[२] इति श्रुतेः ।

अस्य ग्रन्थस्य प्रयोजनं कविशिक्षया सत्काव्यसमृद्धिः । सम्यक् प्रशिक्षिता कवयः लोकोत्तरवर्णनानैपुण्यं समधिगमिष्यन्ति, अन्यथा तेषु उपहासास्पदत्वस्यापि सम्भावना असत्काव्यकृतेरपीति तच्छिक्षानिवार्या ।

ननु प्रकृत्यैव देवतादिप्रसादात् कवित्वस्फूर्तिर्भविष्यतीति कृतं शिक्षयेति चेत्, न, काव्यज्ञशिक्षाया असकृदावृत्तिरूपाभ्यासस्यापि कवित्वस्फुरणे हेतुत्वाङ्गीकारात् । सत्यपि स्वभावतो न्यग्रोधपानासु सान्द्रशाद्वलदलबलितशाखाकारा निपीतमार्तण्डचण्डातपमण्डलान्यन्यग्रोधोद्भवसामर्थ्ये न खलु क्षितिसलिलतेजःसम्पर्कसहकारिकारणं विना तदङ्कुरोद्भवः । अतः कवित्वबीजसहकारित्वसम्पादनाय काव्यशिक्षा तदभ्यासश्च अवश्यापेक्षः । अतः सर्वथैव सर्वदैव चास्य ग्रन्थस्य कालातिरोहिता सत्काव्यसम्पत्तिसम्पादनायोपयोगिता अनुपेक्षणीया । श्रुत्वा मत्वा ध्यात्वा चासकृद् ग्रन्थमेनं ध्रुवं प्रभवेद् असहृदयस्यापि कवित्वाङ्कुरं किं पुनः सहृदयानाम् । तस्मात् मन्दमध्यमोत्तमैः सर्वैर्नवीनैरपि कविभिः श्रोतव्यो मन्तव्यो ध्यातव्यश्चायं प्रबन्ध इति मे मतिः ।

---

१. का० वृ० १.१.१-३ । २. तैत्ति०, २.६ ।

**ग्रन्थवर्ण्यविषयः**

तत्र स्वयमेव ग्रन्थकारः प्राह–

**चत्वारोऽत्र च्छन्दः शब्दश्लेषार्थसिद्धिनामानः ।**
**क्रमशस्तताः प्रतानाः पञ्चचतुष्पञ्चसप्तभिः स्तबकैः।।**

काव्यकल्पलताख्यग्रन्थस्यावान्तरप्रकरणान्यपि समुचितप्रतानशब्दैः ख्यातानि तदवान्तरविभागा अपि तद्योग्यस्तबकशब्दैर्निर्धारितानि । एवञ्च ग्रन्थे लतात्वारोपो यथा तथैवानुरूपं विभागप्रविभागेषु प्रतानत्वस्तबकत्वारोप इति श्लिष्टतरम् । प्रतानाः छन्दःसिद्धिः शब्दसिद्धिः श्लेषसिद्धिः अर्थसिद्धिश्चेति । तत्र नियतस्वरवर्णरागरचनारूपस्य काव्यकलेवरातिशयसौन्दर्याधायकस्य वर्णनावृत्तिप्रवाहापादकस्य सहृदयश्रोतृजन्यश्रवणपुटप्रीतिपानोत्कटतासम्पादकस्य छन्दसः प्रथमं प्रतानं पञ्चमिः स्तबकैः अनुष्टुप्छासनछन्दोऽभ्यास-सामान्यशब्दकवाद-वर्ण्यस्थितिरूपः क्रियते । तत्रापि अनुष्टुभः वैदिकत्वेनार्हत्वात् प्रथममुपादानं क्रियते ।

प्रथमप्रताने छन्दसामनुष्टुपाथेन्द्रवज्रोपेन्द्रवज्रावंशस्थशालिनीमालिनीपुष्पिताग्रावसन्ततिलकादीनां लक्षणपुरस्सरं तदभ्यासविन्यासपाटवप्रकाराः कविना प्रयोगप्रक्रियाद्वारा वर्णिताः । तेषामध्ययनेन सद्य एव छन्दसां प्रयोगे कवित्वं प्रापणेच्छुकाः कवित्वबीजसंस्कारसम्पन्नाः लब्धकवित्वाः प्रौढारूढकवितारश्च भविष्यन्तीति नात्र संशयः ।

तत्र बहव उपायाश्छन्दसामतिशीघ्राभ्यासाय ग्रन्थकारेण प्रदर्शिताः, यथोक्तम्–

**कथापुरादिसर्वार्थदिनकृत्यादिवर्णनैः ।**
**लोकानां दुष्टचेष्टाभिः छन्दोभ्यासं समर्थयेत्**[१] **।।**
**तदर्थान्यपदैः स्वान्यश्लोकार्थपरिवर्तनात् ।**
**तत्रैव च्छन्दस्यभ्यस्येदन्यच्छन्दोऽन्तरेष्वपि**[२] **।।**

छन्दसां कियदभ्यासानन्तरमपि सुधीः शेषछन्दसां सिद्ध्यर्थं छन्दोमर्माणि चिन्तयेत् । कियत् कुत्र वर्णस्वरपरिवर्तनपरिवर्धनपरिहरणादिभिः छन्दोविशेषसिद्धिरिति मुहुश्चिन्तयेत् । यथोक्तं तेनैव–

**कियन्मात्रेषु सिद्धेषु च्छन्दःस्वभ्यासतः सुधीः ।**
**शेषाणां छन्दसां सिद्धौ छन्दोमर्मणि चिन्तयेत्**[३] **।।**

यथा–

**भद्रिकायामन्ते गलाभ्यां रथोद्धता ।**
**रथोद्धतायामादौ गुरुणा मञ्जुभाषिणी ।**
**इन्द्रवज्रायां चतुरक्षराग्रे नगरेण वसन्ततिलका ।**[४]

---

१. का० वृ० १.२.९ । २. तदेव, १.२.११ ।
३. तदेव, १.२.१२ । ४. तदेव,पृ० १४-१५ ।

इत्येवमादिभिरभ्युपायैः कविरयं सम्यक् शिक्षितवान् । एवं प्रथमप्रताने तृतीये स्तबके छन्दःपूरणाय सामान्यशब्दानामेकद्व्यक्षरादीनां स्फुटं वर्णनं विलोक्य मन्दमतयोऽपि कवित्वं बुभुत्सन्ते । यथोक्तं ग्रन्थकारेण–

**एवं साधारणैः शब्दैरौचित्येन नियोजितैः ।**
**दक्षाः छन्दःसु सर्वेषु कुर्वन्ति पादयोजनम्[१] ।।**

साधारणाः शब्दा एकाक्षरा ग्रन्थतो द्रष्टव्याः, यथा–श्री सं० सन् द्राक् दिश् आ नि श्राक् सु उत उत् श्रीमत् श्रेष्ठम्, ज्येष्ठमित्येवमादयः ।

प्रथमे चतुर्थे स्तबके वादाख्ये अनुप्रासयुक्तोक्तिः प्रदर्शिता । कथमनुप्रासो योज्यः काव्य इति विशदं सानुप्रासशब्दावलीप्रदर्शनादिभिरुपायैः स्पष्टीकृतम् । एवं पञ्चमस्तबके वर्ण्यानां स्थितिः प्रदर्शिता–

**अथ वर्ण्यानि कथ्यन्ते तानि यानि कवीश्वरैः ।**
**महाकाव्यप्रभृतिषु प्रबन्धेषु बबन्धिरे[२] ।।**

कस्यां परिस्थितौ कुत्र देशे काले वा कविना किं वर्ण्यमपरिहार्यं यस्य वर्णनेन कवित्वं प्रद्योतितं भवेदिति सर्वं विस्तरशः प्रोक्तम्, अतो ग्रन्थमिदवश्यं पठनीयम् । तदुक्तम्–

**अनुष्टुप्छासनं छन्दोऽभ्यासः सामान्यशब्दकः ।**
**वादे वर्ण्यस्थितिः पूर्वप्रताने स्तबका मताः[३] ।।**

द्वितीयप्रताने–

**रूढयौगिकमिश्राख्या यौगिकाह्वानमालिका ।**
**अनुप्रासो लाक्षणिकः द्वितीये स्तबकाः स्मृताः[४] ।।**

छन्दःसु अनुष्टुब्वर्ण्यादिषु सम्यग्विवेचितेषु तदनन्तरं काव्यशरीरभूतस्य शब्दस्य विवेचनं क्रमप्राप्तं द्वितीये प्रताने विस्तरेण कृतमस्ति । तत्र प्रथमे स्तबके–प्रकृतिप्रत्यय-विभागार्हा यौगिकाः, पाचकपाठकादयः अनादिप्रसिद्धिमागताः प्रकृतिप्रत्ययविभागानर्हा रूढाः, अखण्डलमणिनूपुरादयो योगरूढाः, मिश्रिताः पङ्कजादयश्च त्रिविधाः शब्दा अत्र विवेचिताः सन्ति । द्वितीयस्य द्वितीये योगार्हनामके स्तबके–

**भवन्ति यौगिकाः शब्दाः समासव्यासहेतवः ।**
**तद्योगार्हाणि नामानि कत्यपि प्रतिपादये[५] ।।**

अत्र समासव्याससिद्ध्यर्थं परावृत्तिसहाः शब्दाः केचन वर्णिताः । एवंविधाः शब्दाः क्वचित् पूर्वपरिवृत्तिसहाः क्वचित् परपरिवृत्तिसहा भवन्तीति कविभिः प्रसङ्ग-

---

१. का० वृ०, १.३.४ । २. तदेव १.५.१ । ३. तदेव १.१.५ ।
४. तदेव १.१.६ । ५. तदेव, २.२.१ ।

वृत्तालङ्कारानुसारं योजनीया भवन्ति । द्वितीयप्रताने तृतीये स्तबके अनुप्रासालङ्कार-सिद्ध्यर्थं केचन साधारणाः शब्दा वर्णिताः सन्ति । यथा–

**राजितं राजिभिर्युक्तं पङ्क्तिभिः पटलैः पटुः ।**
**निचितं निचयैरोघैर्मोघं सञ्चयसञ्चितम् ।**
**पुञ्जेन मञ्जुजातेन सुजातं वृन्दसुन्दरम् ।**
**कदम्बचुम्बितं सार्धं कृतार्थं सगुणं गुणैः[१] ।।**

इत्येवमादीन्युदाहरणानि ग्रन्थकारेण वर्णितानि । एवं कृताभ्यासः कविः क्वचिदपि स्वकाव्ये यथोचितमनुप्रासं योजयितुं प्रभवति ।

द्वितीयस्य चतुर्थे मुख्यलाक्षणिकव्यञ्जकशब्दानां साधु व्युत्पादनं कृतमस्ति । साक्षात्सङ्केतितार्थोपस्थापकाभिधाव्यापारवदभिधायकमुख्यशब्दानाम्, मुख्यार्थबाधाद्यनुसन्धान-पूर्वकशक्यार्थसम्बन्धरूपलक्षणाव्यापारवल्लक्षकानां तथा व्यञ्जनाव्यापारवत् व्यञ्जकानां शब्दानाञ्च साङ्गोपाङ्गविवेचनमत्र स्तबके कृतमस्ति ।

**शब्दो मुख्यो लाक्षणिको व्यञ्जकश्च त्रिधा मतः ।**

इत्येवमादिश्लोकैरुपवर्णितम् । गौणोऽपि शब्दः लाक्षणिकेष्वेवान्तर्भावितः । उपादानलक्षणा लक्षणलक्षणा, गौणसारोपा गौणसाध्यवसाना शुद्धसारोपा शुद्धसाध्यावसानेति षड्विधा लक्षणा निरूपिता । यथोक्तम्–

**शब्दव्यापारो निरन्तरार्थनिष्ठोऽभिधा मता ।**
**स तु व्यवधानार्थनिष्ठो भवति लक्षणा ।।**
**शुद्धोऽपचारमिश्राऽसौ द्विधा शुद्धापि हि द्विधा ।**
**उपादानलक्षणाख्या परा लक्षणलक्षणा ।।**
**उपादानो स्वसिद्ध्यर्थं पराक्षेपः यदा तु वै ।**
**परार्थं स्वार्पणं लक्षणेन लक्षणलक्षणा ।।**
**सादृश्याद् गौणसारोपा गौणसाध्यावसानिका[२] ।**

इत्येवमादिभिः श्लोकैर्विस्तरेण सोदाहरणं वर्णितं सर्वं ग्रन्थत एव परिज्ञातव्यम् । तत्र लक्षणार्हाः केचन शब्दा अपि गणिताः सन्ति ।

तृतीये प्रताने–

**श्लेषव्युत्पादनं सर्वं वर्णनोद्दिष्टवर्णने ।**
**अद्भुतं चित्रमित्येते तृतीयं स्तबकाः कृताः[३] ।।**

तत्र श्लेषव्युत्पादनम्, सर्ववर्णना, उद्दिष्टवर्णना, अद्भुतं चित्रञ्चेति पञ्चस्तबकाः सन्ति ।

---

१. का० वृ० २.३.२-३ । २. तदेव, २.४.४-७ । ३. तदेव, १.१.७ ।

सकृदुच्चारितोऽपि शब्दो यत्रार्थद्वयमर्थत्रयं वा द्योतयति स श्लेष उच्यते । अत्र स्तबके श्लिष्टशब्दानां व्युत्पादनं सम्यक् कृतं वर्तते । श्लेषानां योजनाप्रकारोऽपि वर्णितः । तृतीयप्रताने द्वितीयस्तबके सर्ववर्णनसिद्धिप्रकारः प्रदर्शितः । यथोक्तम्–

**जनितश्लेषसंश्लेषैर्वर्ण्यवर्णादिनामभिः ।**
**उपमानकृतोल्लासैः साधयेत् सर्ववर्णनम्**[1] **।।**

वर्ण्यस्य वर्णाकाराधारक्रियाधेयानि नामानि तथा वर्ण्यादिगुणैर्वर्णसदृशानां पदार्थानां नामानि श्लेषार्पितोपमानयुक्तानि कृत्वा सर्ववर्णनं कुर्वन्ति । तत्रैकेन श्वेतादिशब्देन श्वेतादिपदार्थाः सर्वेऽपि वर्ण्यन्ते तत्सर्ववर्णनम् । तृतीये स्तबके उद्दिष्टवर्णनप्रकारः । चतुर्थे चाद्भुतविधिः, पञ्चमे च चित्रकाव्यप्रपञ्चः । एतत् सर्वं मनीषिभिर्ग्रन्थतोऽवलोक्यम् । एवं तृतीये प्रताने पञ्च स्तबकाः सन्ति । चतुर्थे प्रताने–

**तुर्ये पुनरलङ्काराभ्यासवर्ण्याकृतिक्रियाः ।**
**प्रकीर्णाभिधः संख्यासमस्ये स्तबकाः स्थिताः**[2] **।।**

प्रथमेऽलङ्काराभ्यासस्तबके उपमाद्यलङ्काराणां वर्णनं कृतम् । द्वितीये अर्थोत्पत्तिप्रकारः प्रदर्शितः । तत्रार्थानां वर्ण आकारः क्रिया आधार आधेयः सम्बन्धिनश्चैते केषां के भवन्तीति वर्णितम् । तृतीये चतुरस्राकारपदार्थानां सङ्ग्रहः प्रदर्शितः । चतुर्थे क्रियाभ्यासोत्पत्तिर्वर्णिता । पञ्चमे आधाराधेयपरिवारादिभ्योऽर्थोत्पत्तिर्वर्णिता । षष्ठे स्तबके संङ्ख्यातोथोत्पत्तिः निरूपिता । यथा तैरैवोक्तम्–

**औचित्यरचितैः संख्याबन्धबन्धुरितक्रमैः ।**
**उपमाद्यैरलङ्कारैः सुधीरर्थं समर्थयेत्**[3] **।।**

तत्रैकसंख्याबोधकाः पदार्थाः निर्दिष्टास्तैः ; यथा–

**आदित्यमेरुचन्द्रप्रसादा दीपदण्डकलशाश्च ।**
**खड्गहरनेत्रशेषस्वर्दण्डाङ्गुष्ठहस्तिकराः**[4] **।।**

सप्तमे स्तबके समस्याक्रमो निरूपितः तत्र काश्चन समस्याः प्रपूरितास्तैः । तत्र समस्याः–

**पिपिलिका राजति शैलतुल्या ।**
**शैलो विभर्ति परमाणुसमत्वमेव ।**
**मृगात् सिंहः पलायते ।**

तत्र समस्यापूर्तिः कथं कृता, सावलोकनीयास्ति ।

---

१. का० वृ० ३.२.१ । २. तदेव, १.१.८ ।
३. तदेव, ४.६.१ । ४. तदेव, ४.६.२ ।

**कल्पादिकाले गुरुदेहदेशा**
**पिपीलिका राजति शैलतुल्या ।**
**तस्मिंश्च सत्यं धरणिधरोऽपि**
**विगाहते देवगिरीन्द्रशोभाम्[1] ।।**

पुनः शब्दान्तरेण–

**अहो पयोराशिविलासियादः**
**पिपीलिका राजति शैलतुल्या ।**
**सदा जनानां महतां निषङ्गो**
**दत्ते लघूनामपि गौरवाणि[2] ।।**

प्रकारान्तरेण सा समस्यापूर्तिः तत्रैवावलोकनीया । अन्यापि समस्यापूर्तिरवलोकनीयास्ति । यथा–

**कल्पान्तकालनलिनीकृतदेहदेशः**
**शैलो बिभर्ति परमाणुसमत्वमेषः ।**
**पूर्वं युगादिसमये विभराम्बभूव**
**यो जातरूपधरणीधरसन्निभत्वम्[3] ।।**

भङ्ग्यन्तरेण समस्यापूर्तिः सा तत्रैवावलोकनीया । इत्येत्सर्वं ग्रन्थत एवावगन्तव्यम् । विस्तरभयादत्र न विस्तारि ।

ग्रन्थोऽयं विश्वविख्यातसरस्वतीभवनपुस्तकालयाद् १०२८१७ संख्याकां हस्तलिखितपाण्डुलिपिं लब्ध्वा पाठादिशोधनादिप्रकारेण सम्यगालोच्य सम्पादितः । यद्यपि संस्करणादस्मात्पूर्वमपि नैक-संस्करणं प्रकाशितम् ; परन्तु दृष्टिगोचरं नाभवत्, तस्मादेकेन काशीसंस्करणेनात्रालोचितः पाठः । येषां विदुषां ग्रन्थाः साहाय्यरूपेण स्वीकृताः, तेऽपि सर्वे मनीषिणो मया साभारैः सत्क्रियन्ते । सत्यन्त्विदं यद्यदि ते साहाय्यग्रन्था नाभविष्यंस्तदा ग्रन्थस्यास्य सम्पादनं मह्यमसाध्यमेवाभविष्यत् । तत्रापि विशिष्टधन्यवादार्हाः सरस्वतीभवनपुस्तकालयस्याधिकारिणः कर्मचारिणश्च ये एतादृशं दुर्लभग्रन्थानां पाण्डुलिपिं प्राणवत् संरक्ष्य मद्विधान् जनान् उपकुर्वन्ति ।

ग्रन्थमिमं सम्पादयन् कृतज्ञोऽहं महामान्यानां सरलहृदयानामगाधपाण्डित्यपूर्णानां विशेषतो वेदान्तशास्त्रपयोधिपारदृश्वनां स्वविशिष्टप्रतिभाभिः सुनिबद्धानेकग्रन्थानां माननीयानां कुलपतिवर्य्याणां **प्रो० राममूर्तिशर्ममहोदयानां** पादपद्मे कृतज्ञतां हार्दिकीं प्रकटयन् प्रणमामि भूयो भूयः, यतो हि ग्रन्थस्यास्य सम्पादनाय स्वीकृतिं प्रदाय मामनुगृहीत-

---

१. तदेव, ४.७.१ । २. का० वृ० ४.७.२ ।
३. तदेव, ४.७.४ ।

वन्तः । व्याकरणवेदान्तज्योतिषसाहित्यादिविद्यापारङ्गतानाम्, अन्तेवासिनां कृते दत्तजीवनानां श्रीमतां **प्रो० पारसनाथद्विवेदिवर्य्याणा**मुपकारराशिं स्मारं स्मारं स्वकीयां प्रणामाञ्जलिं विनिवेदयामि, यैरहं पदे पदे शिक्ष्ये । विदुषां वरेण्यानां नानाविधगौरवशालिग्रन्थप्रकाशनतत्पराणां सरलमृदुदयापूर्णहृदयानां प्रकाशनसम्पत्तिभिः विश्वविद्यालयसंस्कृतिसंस्कृतगौरववर्द्धने दत्तजीवनानां प्रकाशनसंस्थानस्य निदेशकानां श्रीमतां **डॉ० हरिश्चन्द्रमणित्रिपाठिवर्य्याणां** महोपकारराशिं संस्मरन् तान् पौनःपुन्येन कृतज्ञतामावहामि प्रणमामि च, यैः कर्मण्यस्मिन् मुहुर्मुहुरहं प्रेरितः ।

ततः परं प्रकाशनसंस्थानस्य सहयोगिषु ईक्ष्यशोधनप्रवीणानां **डॉ० हरिवंशकुमारपाण्डेयानाम्**, ईक्ष्यशोधकानां **श्रीअशोककुमारशुक्ल-भाटियोपाह्वातुलकुमाराणां** प्रकाशनसहायकानां **श्रीकन्हईसिंहकुशवाहा**प्रभृतिजनानामुपकारं संस्मरन् तेषामभ्युदयार्थं चिरायुष्यार्थञ्च भगवन्तं प्रार्थयमान आशीर्वचोभिस्तानभिनन्दयामि । अतः परं सरस्वतीभवनग्रन्थालयस्य शाखाभूते नवीनपुस्तकालये पटलसहायकपदे कार्यकराणां **श्रीबाबूलालशास्त्रि**महानुभावानामुपकारं स्मारं स्मारं स्वकीयं प्रणामाञ्जलिं विनिवेदयामि, यतो हि तैः महानुभावैः पाण्डुलिपिगवेषणे सदा साहाय्यं प्राप्तः ।

विजयप्रेससञ्चालकानां **श्रीगिरीशचन्द्र**महोदयानां कृतज्ञतां प्रकटयन् आशीर्वादान् वितरामि, यैर्महता श्रमेण वैज्ञानिकयुगेऽप्यस्मिन् हस्तटङ्कणेनास्य ग्रन्थस्य सुस्पष्टं सुन्दरं मुद्रणं विधाय लोकानामस्माकञ्च महोपकारः कृतः ।

अन्ते ग्रन्थमिमं सश्रद्धया सभक्त्या भवानीविश्वनाथस्वरूपयोः श्रीसिद्धिदात्रीजैगीषव्येश्वरमहादेवयोः श्रीचरणकमलेषु प्रणतिपरम्परापूर्वकं समर्पयन् आशासे यदनेन सम्पादितेन ग्रन्थेन विदुषां छात्राणां कवित्वं बुभुत्सूनाञ्च यः कश्चिदप्युपकारो भवेत्, तेनैवात्मानं कृतार्थं मन्ये । अन्ते टङ्कणदोषादिकस्य क्षमार्थं प्रार्थयमानो विरमामि ।

**वाराणसी**
माघपूर्णिमा
२०५८ वैक्रमाब्दः ।

विदुषां वशंवदः
**ददन-उपाध्यायः**
सहायकसम्पादकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# विषयानुक्रमणिका

## द्वितीयः प्रतानः



## तृतीयः प्रतानः

## चतुर्थः प्रतानः

## परिशिष्टम्– १



●

॥ श्रीः ॥

❀ सङ्कटनाशिन्यै नमः ❀

श्रीमदमरचन्द्रयतिना विरचिता

# काव्यकल्पलतावृत्तिः

**विमृश्य वाङ्मयं ज्योतिरमरेण यतीन्दुना ।**
**काव्यकल्पलताख्येयं कविशिक्षा प्रतन्यते ॥ १ ॥**

**सारस्वतामृतमहार्णवपूर्णिमेन्दो-**
**र्मत्वाऽरिसिंहसुकवेः कवितारहस्यम् ।**
**किञ्चिच्च तद्रचितमात्मकृतं च किञ्चिद्-**
**व्याख्यास्यते त्वरितकाव्यकृतेऽत्र सूत्रम् ॥ २ ॥**

**वाचं नत्वा महानन्दकरसत्काव्यसम्पदे ।**
**कविशिक्षामिमां वच्मि काव्यकल्पलताह्वयाम् ॥ ३ ॥**

वाचं नत्वेति श्रेयोहेतुः । श्रेयसा ह्यविघ्नेन शास्त्रसमाप्तिर्भवति । महानन्दकरं यत्सत्काव्यं तस्य या सम्पद् वृद्धिस्तदर्थम् । सद्यो रसास्वादजन्मा विगलितवेद्यान्तरा परब्रह्मरसास्वादसोदरा परप्रीतिर्महानन्दः । इदं सर्वप्रयोजनोपनिषद्भूतं कविसहृदययोः काव्यप्रयोजनम् । कल्पलताऽपि सङ्कल्पमात्रलभ्यत्वेन महानन्दकरी । सत्काव्या सद्भिर्वर्ण्या या सम्पत् तदर्थं स्यात् । महानन्दः प्रयोजनं तद्युक्तं सत्काव्यमभिधेयं शास्त्रमभिधायकं तयोरभिधानाभिधेयलक्षणः सम्बन्धः । शेषं सुगमम् ।

शास्त्रसङ्ग्रहमाह—

**चत्वारोऽत्र च्छन्दःशब्दश्लेषार्थसिद्धिनामानः ।**
**क्रमशस्तताः प्रतानाः पञ्चचतुष्पञ्चसप्तभिः स्तबकैः ॥ ४ ॥**

सिद्धिशब्दः प्रत्येकं योज्यः। स्तबकसंख्या यथासंख्यम्। अत्र काव्यकल्पलतायां छन्दःसिद्धिप्रतानः पञ्चभिः स्तबकैः, शब्दसिद्धिप्रतानश्चतुर्भिः स्तबकैः, श्लेषसिद्धिप्रतानः पञ्चभिः स्तबकैः, अर्थसिद्धिप्रतानः सप्तभिः स्तबकैः, इत्येते तता विस्तीर्णा लताधर्मत्वात् प्रतानस्तबकारोपः। क्रमेण स्तबकानां नामान्याह—

**अनुष्टुप्छासनं छन्दोऽभ्यासः सामान्यशब्दकः।**
**वादो वर्ण्यस्थितिः पूर्वप्रताने स्तबका मताः ॥ ५ ॥**
**रूढयौगिकमिश्राख्या यौगिकाह्वानमालिका।**
**अनुप्रासो लाक्षणिको द्वितीये स्तबकाः स्मृताः ॥ ६ ॥**
**श्लेषव्युत्पादनं सर्ववर्णनोद्दिष्टवर्णने।**
**अद्भुतं चित्रमित्येते तृतीये स्तबकाः कृताः ॥ ७ ॥**
**तुर्ये पुनरलङ्काराभ्यासवर्ण्याकृतिक्रियाः।**
**प्रकीर्णकाभिधः संख्यासमस्ये स्तबकाः स्थिताः ॥ ८ ॥**

इति शास्त्रसङ्ग्रहः।

काव्यस्य छन्दोमूलत्वात् प्रथमं छन्दःसिद्धिप्रतानस्तत्र पूर्वमनुष्टुप्छासनं यथा—

**आदौ साध्यपदं स्थाप्यम्—**

आदौ प्रथमं साध्यमवश्यं प्रयोज्यं पदं कार्यमेकाक्षरादीनि साध्यपदानि, यथा—श्रीः, लक्ष्मीः, कमला, कमलजा, जलधिजा, दुग्धाब्धिपुत्री, दुग्धाब्धितनया, दुग्धाम्भोनिधिसम्भूता।

**एकादिद्विलघु द्वयात्।**

एको ह्रस्वो दीर्घो वा वर्ण आदौ ययोस्तौ एकादी, द्वौ लघू यत्र पदे तदेकादिद्विलघु पदं जलधिजा, वारिधिजादि द्वयाद्वर्णद्वयात् स्थाप्यम्। यथा—असौ जलधिजा देवी, इयं बारिधिजा देवी, ह्रस्वादिद्विलघुपदस्यादौ लघू गुरुलघू च न प्रयोज्यौ। यथा—इह जलधिजा देवी, अत्र जलधिजा देवी।

**पञ्चाक्षरं समासे के विभक्तिभ्रंशिनि स्वरे ॥ ९ ॥**

पञ्चाक्षरं पदं कुमारपालक्षीराब्धिपुत्रीप्रभृतिपदम्। समासेन कप्रत्ययेन वा विभक्तिभ्रंशहेतुना पुरःस्थस्वरेण वा स्थाप्यम्। यथा—कुमारपाल भूपाल, क्षीराब्धिपुत्रिका सेयं, कुमारपालको राजा, कुमारपाल उल्लासी।

**स्याच्चतुष्पञ्चषड्ह्रस्वं प्रान्ते विषमपादयोः ।**

चतुर्ह्रस्वाक्षरं पदं दशरथादिकं पञ्चह्रस्वाक्षरं पदं कमलवनादिकं षड्ह्रस्वाक्षरं पदं समवसरणादिकं प्रथमतृतीयपादयोः प्रान्ते चतुस्त्रिद्विवर्णेभ्यः प्रायः सर्वगुरुभ्यो निश्चितान्तगुरुभ्यो वा परतः प्रयोज्यम् । यथा—पृथ्वीनाथो दशरथः, अथवा तदा नृपो दशरथः, विस्मेरं कमलवनं रम्यं समवसरणम् ।

**शेषं विशेषणैः पूर्णम्—**

शेषं काव्यं विशेषणैः पूर्णं क्रियते ।

**तूर्णं काव्यप्रदं पदम् ॥ १० ॥**

इत्युक्तप्रकारेण प्रयुज्यमानं पदं शीघ्रं काव्यप्रदं भवति । अनुष्टुभि प्रायः पथ्यावक्त्रेणाभ्यासः क्रियते ।

**अनुष्टुभि सनौ नाद्यात् तुर्यात्स्याद्योक्षराद्वक्त्रम् ।**
**पथ्यावक्त्रं भवेत् तुर्याद्वर्णाज्जे युग्मपादयोः ॥ ११ ॥**
**ऊजे तुर्यान्नयभरमसैर्नविपुलादयः ।**
**आस्वोजे प्रायस्तुर्यो गुर्युजि षड्भ्यो लघुर्ध्रुवः ॥ १२ ॥**
**वर्णमात्राभिधं द्वेधा छन्दः पद्यं चतुष्पदी ।**
**मयौ रसौ तजौ भ्नौ स्युरष्टौ वर्णगणास्त्रिकाः[1] ॥ १३ ॥**
**मस्त्रिगुरुर्यो मुखलो मध्यलघू रस्तथान्त्यगुरुभाक्सः ।**
**तोऽन्तलघुर्जो मध्यगुरादिगुरुर्भश्च नस्त्रिलघुः ॥ १४ ॥**
**नाम्ना दतचपषा द्वित्रिचतुष्पञ्चषट्कलाः ।**
**मात्रागणाः स्युर्भेदैर्द्वित्रिपञ्चाष्टत्रयोदशैः ॥ १५ ॥**
**पूर्वं सर्वगुरोः पादाल्लघुराद्यगुरोरधः ।**
**अग्र्यं तूपरिवद्भूयो लघुराद्यगुरोरधः ॥ १६ ॥**
**आदौ स्युर्गुरवो यावत् पादः सर्वलघुर्भवेत् ।**
**प्रस्तारः कथितो वर्णछन्दसामिति कोविदैः ॥ १७ ॥**

---

१. त्रिवर्णका इत्यर्थः ।

**आद्याङ्कुरोरधो ह्रस्वमग्र्यं तूपरिवल्लिखेत् ।**
**आदौ लघुं गुरुं तूने मात्राजातिषु सम्भवेत् ॥ १८ ॥**

**एकमात्र ऋजुर्ह्रस्वो लघुर्ज्ञेयो गुरुः पुनः ।**
**वक्रो दीर्घो विसर्गान्तः सानुस्वारो द्विमात्रकः ॥ १९ ॥**

**अह्लादिसंयुते वर्णे व्यञ्जने चाग्रगे लः गुरुः ।**
**पादान्ते वा लघोर्गत्वं वंशस्थादिषु नो पुनः ॥ २० ॥**

अह्लादि, यथा—

तव ह्रियाऽपह्रियो मम ह्रीरभूच्छशिग्रहेऽपि द्रुतं न धृता ततः ।
बहुलभ्रामरमेचकतामसं मम प्रिये क्व समेष्यति तत्पुनः ॥ १ ॥

तीव्रप्रयत्नोच्चारेण ह्लादावपि लघुर्गुरुः ।
बर्हभारेषु केशान् वा सुप्तमीन इव ह्रदः ॥ २ ॥

विशेषेणोपायमाह—

**विशिष्टार्थो वर्णाकाराधाराधेयक्रियादिभिः ।**

वर्ण्यः पदार्थो वर्णेन आकारेण आधारेण आधेयेन क्रिययाऽऽदिशब्दात्परिवारादिभिः सविशेषणः क्रियते । यथा—

पूर्णिमेन्दुः सितच्छायः सद्वृतोऽम्बरभूषणम्[१] ।
कलाकलापकलितो नयनानन्दनो बभौ ॥ ३ ॥

**तथा तुल्यश्रिया चारुर्बन्धुश्चौरो रिपुः सुहृत् ॥ २१ ॥**

तथा वर्ण्योऽर्थो वर्णादिभिस्तुल्यानां सदृशपदार्थानां शोभया चारुर्बन्धुश्चौरो वा शत्रुर्वा मित्रं वा भणनीयः । यथा—

भवद्यशोभरो भाति स्मेरकुन्देन्दुसुन्दरः ।
हारतारकमन्दारकैलासोदरसोदरः ॥ ४ ॥

कर्पूरपूरुरुकूचौरः शरदभ्रप्रभारिपुः ।
ऐरावततुषाराद्रिशेषमित्रं क्षमापते ॥ ५ ॥

पुनर्विशेषणोपायान्तरमाह—

**गुणात् श्रिया युतभ्राजिरोचिष्णुद्योतितादयः ।**

---

१. भूषण इति समीचीनः पाठः प्रतिभाति ।

गुणाद्वर्ण्यवर्णादेः परतः श्रीशब्दस्तथैतदुपलक्षणात् लक्ष्मीच्छायाशोभाकला-कान्तिभावप्रत्ययादयः कार्यास्ततस्तत्परतः समासेन युतार्था भ्राजिष्णुरोचिष्णु-द्योतितार्थादयश्च। क्वापि श्रीप्रभृतिशब्दान् विनापि केवलगुणादेव परतस्तथा। क्वचिदसमासेनापि युतार्थादयो योज्याः। यथा—

शोणश्रीसंयुतो भानुर्वृत्तलक्ष्मीसमन्वितः।
अंशूनां शोभया कीर्णो गगनस्थितिसङ्गतः॥ ६॥

श्यामलद्युतिविभ्राजो गर्जिरोचिष्णुवैभवः।
विद्युता द्योतितः प्रीतिं स्तनयित्नुस्तनोत्ययम्॥ ७॥

**तुल्यादमो सदृग्जिष्णुमुख्याः पूर्वं जितादयः॥ २२॥**

तुल्याद्वर्ण्यस्य वर्णादिभिस्समानात्परतोऽमी पूर्वोक्तरीत्या युतार्थाद्यास्तथा सदृगर्थाश्च जिष्णुजैत्रजयिजित्वरजितमुख्याश्च। तथैतदुपलक्षणात् स्पर्द्धिधिक्कारि-निर्भर्त्सकविडम्बनतर्जकादयो योज्याः। तथा तुल्यात्पूर्वं जित-भर्त्सित-बिडम्बित-धिक्कृत-न्यक्कृत-निकृत-पराभूत-अवहेलित–अवगणित-अवमानित–तिरस्कृत-अधःकृत-तर्जितादयो योज्याः। यथा—

चण्डश्रीसंयुता कीर्तिः कर्पूरभ्राजिवैभवा।
यस्य गङ्गोर्मिरोचिष्णुः कुन्दश्रीद्योतिता बभौ॥ ८॥

कैलाससदृशं रेजे विष्णुशङ्खांशुजिष्णुभम्।
यद्यशो विधुधिक्कारि तुषाराद्रिविडम्बनम्॥ ९॥

जितपार्वणशीतांशु पराभूतभवाचलम्।
निर्भर्त्सिततुषाराद्रि भाति भूप भवद्यशः॥ १०॥

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां
काव्यकल्पलताकविशिक्षावृत्तौ छन्दःसिद्धिप्रताने
प्रथमेऽनुष्टुप्छासनस्तबकः प्रथमः॥१॥

## अथ छन्दोऽभ्यासविधिः

**अआ इई उऊ अंअः ह्रस्वदीर्घव्यवस्थया ।**
**काप्येकव्यञ्जनोक्तेन छन्दसां परिपाटिका ॥ १ ॥**

अआ प्रथमे पादे इई द्वितीये पादे उऊ तृतीये पादे अनुस्वाराकारौ चतुर्थे पादे लघुस्थाने ह्रस्वो गुरुस्थाने दीर्घ इत्यनया व्यवस्थया ककारादि-हकारान्तानां मध्यादेकव्यञ्जनोच्चारितेन पद्येन पुनः पुनः, परिवर्तनं क्रियते । एकाक्षरादिसप्ताक्षरान्तं छन्दः कविभिर्बाहुल्येनाप्रयुक्तत्वान्नात्र लिखितम् । अष्टाक्षरं विषमवृत्तं पथ्यावक्त्रम्, यथा—

काकाकाकाककाकाकाकीकीकीकीकिकीकिकी ।
कूकूकूकूकुकूकूकूकंकंकंकंककंककम् ॥ १ ॥

एवं सर्वत्र व्यञ्जनैः ।

**नवाक्षरम्—**

रो नरौ भवति भद्रिका ।
रेण जेन रेण कामिनी ।

**दशाक्षरम्—**

वेदैर्मत्ता मभसगयुक्ता ।
मान्यो गो यदि पणवो बाणैः ।

एकादशाक्षरम्—

स्यादिन्द्रवज्रा ततजा गुरू चेत् ।
काकाककाकाककाककाकाकोकीकिकीकीकिकिकीकिकीकी ।
कूकूकुकूकूकुकुकूकुकूकूकङ्कंकङ्कंककङ्कङ्कम् ॥ २ ॥
एवं सर्वत्र छन्दःसु ज्ञेयम् ।
उपेन्द्रवज्रा जतजा गयुग्मम् ।
इन्द्रवज्रोपेन्द्रवज्रयोरन्योन्यं हि मेलनं उपजातिर्भवेत् ।
इन्द्रवंशावंशस्थयोरपि ।
रान्नरौ लघुगुरू रथोद्धता ।
स्वागता तु रनभाद्गुरुयुग्मम् ।
वेदैश्छिन्ना शालिनी मस्ततौ गौ ।
उत्थापिनी तजभला गयुता ।
तानां त्रयं गौ लयग्राहिसञ्ज्ञम् ।

दोधकमुक्तमिदं भभभाद्गौ ।
सससा लगुरू विदुषी मता ।
तो जौ लगुरू यदि मोटनकम् ।
म्भौ नलौ वेदैर्भ्रमरबिलसितम् ।

द्वादशाक्षरम्—

ख्यातेन्द्रवंशा ततजैरसंयुतैः ।
वदन्ति वंशस्थमिदं जतौ जरौ ।
द्रुतविलम्बितमत्र नभौ भरौ ।
इह तोटकमम्बुधिसैः प्रथितम् ।
चतुर्भिर्यकारैर्भुजङ्गप्रयातम् ।
सम्मता स्रग्विणी रैश्चतुर्भिर्मता ।
त्भौ ज्रौ यदा तु ललिता भवेत्तदा ।
प्रमिताक्षरा सगणतो जससैः ।
परिकीर्तितं केकिरवं सयौ स्यौ ।

त्रयोदशाक्षरम्—

त्रिच्छेदा मनजरगैः प्रहर्षिणीयम् ।
जतौ ससौ गो भवति मञ्जुभाषिणी ।
सजसा जगौ यदि तदा तु नन्दिनी ।
सजसा सगौ यदि तदा कुटजं स्यात् ।
गदितं सुदन्तं सयसा जगौ यदा ।

चतुर्दशाक्षरम्—

ख्याता वसन्ततिलका तभजा जगौ गः ।
अश्वैर्लक्ष्मीर्मतेयं म्रौ ततौ गद्वयञ्चेत् ।

पञ्चदशाक्षरम्—

वसुयतिरियमुक्ता मालिनी नौ मयौ यः ।

सप्तदशाक्षरम्—

गुहास्यैर्विश्रान्तिर्यमनसभला गः शिखरिणी ।
यतिर्वसुकृता जसौ जसयलाश्च पृथ्वी गुरुः ।
मन्दाक्रान्ता मभनततगा गो यतिर्वेदषड्भिः ।
नसमरसला गः षड्वेदैर्यतौ हरिणी मता ।

एकोनविंशत्यक्षरम्—

आदित्यैर्यदि मः सजौ सततगा शार्दूलविक्रीडितम् ।

एकविंशत्यक्षरम्—

विज्ञेया स्रग्धराऽसौ मरभनययया वाह्वाहैर्यतिश्चेत् ।

अर्द्धसमम्—

अयुजि ननरजा भवन्ति पादे युजि च नजौ जरगाश्च पुष्पिताग्रा ।

विषमे ससजा गुरू समे स्युः सभरा यौ यदि मालभारिणी सा ।

एतावौपच्छन्दसिकभेदौ ।

विषमे ससजा गुरुः समे सभरा ल्गौ तु तदा प्रबोधिता ।

अयं वेतालीयभेदः ।

अथ आर्यालक्षणम्—

**यस्यां सप्तचतुष्कलगणा गुरुश्च जगणो न विषमे स्यात् ।**
**जः षष्ठोऽथ नलघुकौ पूर्वार्द्धे जगुरिमामार्याम् ॥ २ ॥**

**षष्ठे द्वितीयलात्परके नले मुखलाच्च यदिह पदघटना ।**
**अपरार्धे पञ्चमके मुखलादिह भवति षष्ठो लः ॥ ३ ॥**

अन्यत् आर्याच्छन्दो मत्कृतच्छन्दोरत्नावल्यां ज्ञेयमिति ।

पुनश्छन्दोऽभ्यासोपायमाह—

**चतुष्कतद्धिताख्यातकृत्स्यादित्यादिसम्भवैः ।**
**कर्तृकर्मादिसित्यादिविभक्त्युत्थविशेषजैः ॥ ४ ॥**

**समाससंश्रितैर्नाममालोत्थैर्यौगिकैरपि ।**
**निरर्थैरर्थसंयुक्तैर्लाटानुप्राससंयुतैः ॥ ५ ॥**

**षड्भाषासम्भवैः शब्दैरभ्यसेच्छन्दभेदजैः ।**

शब्दैरिति सर्वत्र सम्बन्धनीयम् । चतुष्कशब्दैर्यथा—

दण्डाग्रं सा गता नारी दधीदं हि नदीयते ।
मधूदकं वधूढासा तवेहा सेयमङ्गना ॥ ३ ॥

तद्धितशब्दैर्यथा—

इदानीमधुना सद्यः कुत्र यत्र यथा तथा ।
सर्वथा सर्वदा धीमान् बहुधाऽनेकधा कथम् ॥ ४ ॥

आख्यातशब्दैर्यथा—

करोति तनुते वेत्ति वक्ति जानाति पृच्छति ।
भुङ्क्ते भक्षयति प्साति स्तौति रौति न वाति च ॥ ५ ॥

कृत्शब्दैर्यथा—

अलङ्करिष्णुवन्दारुभासुरस्पृहयालवः ।
संविधाय विधातुं स भेजिवान् कृतवानपि ॥ ६ ॥

स्यादिशब्दैर्यथा—

हंसो हंसौ शुभौ हंसा हंसं हंसौ च हंसकान् ।
हंसेन वरहंसाभ्यां हंसैर्हंसाय शोभते ॥ ७ ॥

हंसाभ्यां राजहंसेभ्यो हंसात् हंसस्य हंसयोः ।
हंसानां प्रवरे हंसे हंसयोर्हंसकेष्वपि ॥ ८ ॥

बाला बाले वरा बाला बालाम्बाले मनोरमे ।
बाला बालया बालाभ्याम्बालाभिः प्रतिवासरम् ॥ ९ ॥

बालायै वरबालाभ्यां बालाभ्यस्तदनन्तरम् ।
बालाया वरबालाभ्यां बालाभ्योऽपि निरन्तरम् ॥ १० ॥

बालाया बालयोर्नित्यं बालानां विभ्रमस्पृशाम् ।
बालायां बालयोरेब बालासु सकलास्वपि ॥ ११ ॥

त्यादिशब्दैर्यथा—

करोति कुरुते नित्यन्ते कुर्वन्ति करोषि किम् ।
कुरुथः कुरुथ स्पष्टङ्करोमि वितनोमि च ॥ १२ ॥

कुर्वः कुर्मो वयङ्कार्यं कुरुते कार्यमुत्तमः ।
कुर्वाते कुर्वते देवाः कुरुषे त्वं रुषोज्झितः ॥ १३ ॥

कुर्वाथे कुरुध्वे कुर्वे कुर्वहे कुर्महे वयम् ।

एवं सर्वकालविभक्तिषु । कर्तृकर्मादिशब्दैर्यथा—

कटङ्करोति दत्तोऽयन्तृणैर्दत्ते द्विजाय गाम् ॥ १४ ॥

वृक्षात्पतन्ति पर्णानि राज्ञो धर्मे दृढा मतिः ।

स्यादिविभक्तिविशेषजैर्यथा—

प्रविशन्ति पुरे कुन्ता हे शिष्य पठ सर्वदा ।
मातरं मातुरस्मार्षीन् मातुरध्येति मातरम् ।। १५ ।।

त्यादिविभक्तिविशेषजैर्यथा—

स्म पुराधीयते तेनेति ह स्म कथयत्यदः ।
वसन्तीह पुरा छात्रा राघवो भाषते तदा ।। १६ ।।
ऊषुरत्र पुरा च्छात्रा बभाषे राघवस्तदा ।
पुरावसन्निह च्छात्रास्तदाऽभाषत राघवः ।। १७ ।।
पुराऽवात्सुरिह च्छात्रास्तदाऽभाषिष्ट राघवः ।
यावद्भुङ्क्ते पुरा भुङ्क्ते पुरा श्वो भुङ्क्त इत्यपि ।। १८ ।।

समाससंश्रितैर्यथा—

नीलोत्पलञ्जरद्धस्ती केवलान्नं नवोदकम् ।
पञ्चपूली सुखप्राप्तो गोहितं ग्रामनिर्गतः ।। १९ ।।
आरूढवानरो वृक्षः पलाशधवपिप्पलाः ।
पीतच्छत्रोपानहं स्यादुपकुम्भमधिस्त्रि च ।। २० ।।

नाममालाशब्दैर्यथा—

धात्री वसुन्धरा भूमिः काननं विपिनं वनम् ।
राजा पृथ्वीपतिर्भूपः समुद्रोऽम्बुधिवारिधी ।। २१ ।।

यौगिकशब्दैर्यथा—

क्षितीशः क्ष्मापतिः क्ष्मापः क्षोणीनाथः क्षमापतिः ।
लक्ष्मीशः श्रीपतिः श्रीपः स्वर्नाथः स्वर्गनायकः ।। २२ ।।

निरर्थैर्यथा—

सकाकाचमसाराचसमासाविहरादरा ।
सगावगावरागासोरानोरासकधीमधी ।। २३ ।।

सार्थकैर्यथा—

तर्णको वर्णकश्चैव कर्णकश्चित्रपर्णकः ।
कुडम्मुडम्महालीकं स्तोकं सङ्कुलसङ्करौ ।। २४ ।।

लाटानुप्राससम्भवैर्यथा—

यामिनीं यामिनीनाथो मेदिनीं मेदिनीश्वरः ।
नलिनीं नलिनीकान्तस्तोषयामास तोषवान् ॥ २५ ॥

षड्भाषासंश्रितैर्यथा—

संस्कृतं प्राकृतञ्चैव शौरसेनी च मागधी ।
पैशाचिकी चापभ्रंशं षड् भाषाः परिकीर्तिताः ॥ २६ ॥

संस्कृतं प्रस्तुतोक्तमेव । प्राकृतभवैर्यथा—

सम्पया सरिया एसा दीहाऊ धणुहन्धिणू ।
वीसा तीसा कुहो किम्पि केमुयं किं मुयं तहा ॥ २७ ॥

( संस्कृतछाया )

सम्पत्सरिदेषा दीर्घायुर्धनुषन्धेनुः ।
विंशत्रिंशत्कुतः किमपि किंशुकङ्किं श्रुतं तथा ॥

शौरसेनीभवैर्यथा—

कुदो अन्देउरन्दाव पदिस्मापुरवं कधम् ।
नाधो भविय भोदूण भविम्प्रदि करिम्प्रदि ॥ २८ ॥

( संस्कृतछाया )

कुतः अन्तःपुरन्तावत्प्रतिज्ञापूर्वङ्कथम् ।
नाथः भविता भूत्वा भविष्यति करिष्यति ॥

मागधीशदैर्यथा—

एते सुपुलिसे विज्जाहले जाणादि सुत्थिदे ।
कस्मका वलणम्पस्मा पस्माहम्पस्मवज्झिदे ॥ २९ ॥

( संस्कृतछाया )

एषः सुपुरुषः विद्याधरः जनाति सुस्थितः ।
कन्यका वरणं प्रज्ञा पुण्याःहं पुण्यवर्जितः ॥

पैशाचीभवैर्यथा—

कुतुम्बकं हितपकञ्जातिसो तातिसो गुनो ।
भरिआ कसटं सक्वो सङ्घो गन्तून पव्वती ॥ ३० ॥

( संस्कृतछाया )

कुटुम्बकं हृदयं यादृशः तादृशः गुणः ।
भार्या कष्टं स्वर्गः सङ्घः गत्वा पार्वती ॥

अपभ्रंशभवैर्यथा—

तरुहे गिरिहेर्जोसो जिमच्छम्मुहु सङ्करु ।
जहिन्तहि सामियहो कहांहु तउ आगदो ॥ ३१ ॥

( संस्कृतछाया )

तरुः गिरिः यथा षण्मुखः शङ्करः यत्र तत्र ।
स्वामिन् अहो कुतः भगवन् आगतः ॥

शब्दभेदजैर्यथा—

**वर्णानेकस्य शब्दस्य सर्वान्नवनवस्वरैः ॥ ६ ।**
**संयोज्य जनिता ये ते शब्दाः स्युः शब्दभेदजाः ।**
**अनुप्रासेषु चित्रेषु सोपयोगा भवन्त्यमी ॥ ७ ॥**

यथा करः कूरः किरिः कीरः क्रूरः कुररकोरकौ ।
कुर्कुरः कर्करः कारा राकारङ्कोऽङ्कुरः करी ॥ ३२ ॥

रिरी रोरौ रिराकारः करीराकररङ्कुकाः ।
काककेकिककङ्कोककारकोकाङ्ककेकराः ॥ ३३ ॥

पुनरुपायान्तरमाह—

**कथापुरादिसर्वार्थवर्णनकृत्यादिवर्णनैः ।**
**लोकानां दुष्टचेष्टाभिः छन्दोऽभ्यासं समर्थयेत् ॥ ८ ॥**

कथाभिर्यथा—कथा रामायणभारतादयः ।

अस्त्ययोध्या पराऽयोध्या पुरी स्वर्गपुरीसमा ।
तस्यां दशरथो राजा समभूद्भूरिविक्रमः ॥ ३४ ॥

तनयाः समजायन्त चत्वारस्तस्य भूपतेः ।
रामो लक्ष्मणभरतशत्रुघ्ना इति नामभिः ॥ ३५ ॥ इत्यादि ।

पुरादिवर्णनैर्यथा—

**पुरनृपकुमारमन्त्रिप्रयाणरणदूतजलधिवनगिरयः ।**
**रविचन्द्रोदयपरिणयऋतुमधुजलकेलिरतविरहाः ॥ ९ ॥**

**ध्वस्तध्वान्तभरा रत्नवेश्मविस्मेररश्मिभिः ।**
**राजधानी दिनस्येव तत्पुरं द्योतते सदा ॥ १० ॥**

इत्यादि सर्वार्थवर्णनैर्यथा ये केऽपि पदार्था दृग्गोचरीभवन्ति ते वर्ण्याः ।

यथा—

स्थाली भाति विशालेयं सिद्धान्नपरिपूरिता ।
भूरिकर्पूरसौरभ्यैरम्भोभिः शोभते घटः ॥ ३६ ॥

दिनकृत्यवर्णनैर्यथा—

अयमुद्यमवान् ब्राह्मे मुहूर्ते निद्रयोज्झितः ।
सद्यः शय्यां परित्यज्य चक्रे देवगुरुस्मृतिम् ॥ ३७ ॥

नमस्कारपरावर्तपरायणमनाः क्षणम् ।
स्थित्वा बाह्यभुवं गत्वा देहचिन्तां विनिर्ममे ॥ ३८ ॥

सदनं पुनरागत्य विदधे दन्तधावनम् ।
स्नानमाधाय शुद्धात्माऽऽनर्च देवं जगद्गुरुम् ॥ ४६ ॥

इत्यादि । लोकानां या चेष्टा दृश्यते सा सा काव्यबन्धे न कार्या ।

यथा—

पुष्पाणि पाणिदेशेऽसौ कृत्वा क्रीणाति कामुकः ।
ताम्बूलिकोऽपि ताम्बूलमस्य पश्यार्पयत्यसौ ॥ ४० ॥

मित्रेण सममालापमयमारचयत्यहो ।
अयं हृष्टो हसत्युच्चैरयं गायति गायनः ॥ ४१ ॥

पुनरुपायान्तरमाह—

**तदर्थान्यपदैः स्वान्यश्लोकार्थपरिवर्तनात् ।**
**तत्रैव च्छन्दस्यभ्यस्येदन्यच्छन्दोऽन्तरेष्वपि ॥ ११ ॥**

स्वकृतं परकृतं वा श्लोकं तदर्थेन च नवैः पदैस्तेनैव च्छन्दसा छन्दोऽन्तरैर्वा परिवर्तयेत् । यथा तत्रैव च्छन्दसि—

प्रत्यर्थिपृथिवीपालतमोजालदिवाकरः ।
नीतिव्रततिपर्जन्यो राजते पृथिवीपतिः ॥ ४२ ॥

प्रत्यनीकावनीकान्तध्वान्तविध्वंसनांशुमान् ।
नयवल्लिवनाम्भोदः शोभते भूमिवल्लभः ॥ ४३ ॥

प्रतिपक्षक्ष्मानाथतिमिरोन्माथभानुमान् ।
न्यायवल्लीपयोवाहः स विभाति भुवो विभुः ॥ ४४ ॥

छन्दोऽन्तरैर्यथा—

प्रत्यर्थिपृथ्वीहृदयाधिनाथध्वान्तौघविध्वंसनवासरेशः ।
सन्नीतिवल्लीवननीरवाहो विश्वम्भराया दयितो विभाति ॥ ४५ ॥

दुर्धरारिधरणीधवोद्धतध्वान्तमण्डलविखण्डनांशुमान् ।
नीतिवल्लिवननूतनाम्बुदो मेदिनीविभुरसौ विभासते ॥ ४६ ॥

क्रूरारातिक्ष्मापजातिप्रतानध्वान्तस्तोमध्वंसनव्योमरत्नम् ।
न्यायोन्मीलद्वल्लिनव्याम्बुवाहो भूभामिन्या वल्लभो भासतेऽसौ ॥ ४७ ॥

दृष्यद्विरोधिधरणीदयितान्धकारप्राग्भारतारमददारुणतीक्ष्णभानुः ।
सन्न्यायवर्तिवननूतनतोयवाहो विभ्राजते वसुमतीयुवतीभुजङ्गः ॥ ४८ ॥

मालिन्यामेव यथा—

अवनिघवकिरीटन्यस्तवैदूर्यरत्नद्युतिमिषमधुपालो सेव्यपादारविन्दः ।
निखिलनृपतिचूडामाल्यसौरभ्यलुभ्यन्मधुपयुवतिराजीनादवाचालपादः ॥४९॥

अतुलधरणिपालश्रेणिवेणिप्रसूनप्रसृमरमकरन्दस्नातपादारविन्दः ।
प्रणमदवनिनाथोत्तंसमाणिक्यमालाकिरणघुसृणनीरस्नातपादाब्जयुग्मः ॥५०॥

नमदखिलधरित्रीनाथचूडाकिरीटस्फटिककिरणमालासेव्यमानाङ्घ्रिपद्मः ।
निजचरणनखांशुव्याजकाश्मीरपङ्क्क्षणतिलकितनम्रीभूतभूपालफालः ॥५१॥

ततनृपतिकिरीटस्फारमाणिक्यमालास्फुरदरुणमयूखद्योतमानाङ्घ्रिपीठः ।
प्रणतनृपतिराजीमौलिकोटीरकोटीस्फटिकरुचिजलान्तःशोभमानाङ्घ्रि पद्मः॥५२॥

एवं परकृतान्यपि काव्यानि पदान्तरैश्छदोऽन्तरैश्छन्दःसिद्धये परावर्तयेत् ।

अक्लेशेन छन्दसां ज्ञानोपायमाह—

**कियन्मात्रेषु सिद्धेषु च्छन्दःस्वभ्यासतः सुधीः ।**
**शेषाणां छन्दसां सिद्ध्यै छन्दोमर्माणि चिन्तयेत् ॥ १२ ॥**

यथा—

भद्रिकायामन्ते गलाभ्यां रथोद्धता ।

इन्द्रवज्रोपेन्द्रवज्रयोरन्तगुरोः प्रागधिकलघुना इन्द्रवंशावंशस्थे भवतः ।

विदुब्यामन्त्यवर्णद्वयात् प्राक् लघुना मोटकम् ।

मोटके पूर्वगुरुस्थाने लाभ्यां तोटकम् ।

रथोद्धतायामादौ गुरुणा ललिता।
वंशस्थे सप्ताक्षराग्रे लघुना मञ्जुभाषिणी।
रथोद्धतायामादौ लाभ्यां नन्दिनी।
स्वागतायां प्रथमं लाभ्यां कुटजम्।
वंशस्थे पूर्वलघुना सुदन्तम्।
इन्द्रवज्रायां चतुरक्षराग्रे नगणेन वसन्ततिलका।
शालिन्यां चतुरक्षरान्ते चतुर्गुरुभिश्चित्रा।
वसन्ततिलकायाः प्रान्तगुरोः प्राक् लघुना मृदङ्गकः।
शिखरिण्याः प्रान्तगुरोः प्राक् लघुद्वयस्थाने गुरुणा जयानन्दम्।
शालिन्यां चतुरक्षराग्रे नसाभ्यां मन्दाक्रान्ता।
लक्ष्म्यां सप्ताक्षरप्रान्ते नगाभ्यां काञ्ची।
मन्दाक्रान्तायां चतुरक्षराग्रे लघुना चन्द्रलेखा।
मन्दाक्रान्तायां चतुरक्षराग्रे गुरुणा कुसुमितलतावेल्लिता।
हरिण्यामादौ लघुना ललितम्।
मन्दाक्रान्तायामादौ लगाभ्यां मेघविस्फूर्जिता।
शार्दूले आद्यगुरुस्थाने लाभ्यां मत्तेभविक्रीडितम्।
शार्दूलस्य प्रान्तचतुरक्षरस्थाने सगणेन शार्दूलललितम्।
मेघविस्फूर्जितायां षडक्षराग्रे लघुना शोभा।
काञ्च्यां सप्ताक्षराग्रे लाभ्यां चित्रमाला।
लक्ष्म्यां सप्ताक्षरान्ते नभगैः स्रग्धरा।
काञ्च्यां सप्ताक्षराग्रे नगणेन स्रग्धरा।
स्रग्धरायामाद्यगुरुस्थाने लाभ्यां महास्रग्धरा।
शार्दूलविक्रीडितान्ते सलगैर्विभ्रमगतिः।
प्रमिताक्षरायामाद्यपञ्चाक्षरैः पर्यन्ते क्षिप्तैर्द्रुतविलम्बितम्।
स्रग्धराया आद्यसप्ताक्षरैर्हरिण्याः प्रान्तसप्ताक्षरैर्जया।
स्रग्धराया आद्यसप्ताक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरैर्ज्योत्स्ना।
मालिन्या आद्याष्टाक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरैश्चन्द्रोद्योतः।
मालिन्या आद्याष्टाक्षरैर्हरिण्याः प्रान्तसप्ताक्षरैरुपमालिनी।

मन्द्राक्रान्ताया आद्यदशाक्षरैः शिखरिण्याः प्रान्तषडक्षरैर्मदनललिता।
शालिन्या आद्यचतुरक्षरैः शार्दूलस्य प्रान्तद्वादशाक्षरैः कामलता।
मन्दाक्रान्ताया आद्यदशाक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरैर्हरिणी।
हरिण्या आद्यदशाक्षरैः शालिन्याः प्रान्तसप्ताक्षरैः पद्मम्।
हरिण्या आद्यदशाक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरै रोहिणी।
स्रग्धराया आद्यसप्ताक्षरैः शार्दूलस्य प्रान्तैकादशाक्षरैः काञ्ची।
चन्द्रलेखाया आद्यैकादशाक्षरैर्हरिण्याः प्रान्तसप्ताक्षरैश्चलम्।
चन्द्रलेखाया आद्यैकादशाक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरैः केसरम्।
हरिण्या आद्यैकादशाक्षरैः शालिन्याः प्रान्तसप्ताक्षरैश्चन्द्रमाला।
शिखरिण्या आद्यद्वादशाक्षरैर्हरिण्याः प्रान्तसप्ताक्षरैर्मकरन्दिका।
शिखरिण्या आद्यद्वादशाक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरैश्छाया।
स्रग्धराया आद्यचतुर्दशाक्षरैः शिखरिण्याः प्रान्तषडक्षरैः सुवदना।

इत्यादि स्वबुद्धयाऽप्यूह्यम्।

अथ यतिशिक्षामाह—

**पादान्ते आद्याक्षरविच्छिन्नपादान्तयोर्यतिः क्रियते।**
**लुप्तालुप्तविभक्तिकयोः पुनरर्धे समाससन्धौ न ॥ १३ ॥**

पादान्ते यथा—

शाश्वतानन्दरूपाय तमःस्तोमैकभास्वते।
सर्वज्ञाय नमस्तस्मै कस्मैचित्परमात्मने ॥ ५३ ॥

न त्वेवम्।

नमस्तस्मै महादेवाय शशाङ्कार्धधारिणे ॥ इति।

लुप्तविभक्तिके यथा—

नमस्तुङ्गशिरश्चुम्बि चन्द्रचामरचारवे।

अलुप्तविभक्तिके यथा—

वशीकृतजगत्कालं कण्ठेकालं नमाम्यहम् ॥ इति।

आद्याक्षरविच्छिन्ने लुप्तालुप्तविभक्तिके यथा—

उत्तुङ्गस्तनकलशद्वयानताङ्गी लोलाक्षी विपुलनितम्बशालिनी च।
यक्षश्चक्रे जनकतनया स्नानपुण्योदकेष्वित्यादि।

श्लोकार्द्धेन समासो यथा—

सुरासुरशिरोरत्नराजिनीराजितक्रमः ।
जयत्यपारसंसारपारदृश्वा जिनेश्वरः ॥ ५४ ॥

न त्ववेम् ।

सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी ।
पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवम् ॥ ५५ ॥

अर्धेन सन्धिर्यथा—

नमस्यामि सदोद्भूतमिन्धनीकृतमन्मथम् ।
ईश्वराख्यं परं ज्योतिरज्ञानतिमिरापहम् ॥

**यतिं कुर्यात् पदान्तस्थां पदमध्येऽपि कुत्रचित् ।**

यथा—

पर्याप्तं तप्तचामीकरकनकतटे श्लिष्टशीतेतरांशावित्यादि । यथा—

कूजत्कोयष्टिकोलाहलमुखरभुवः प्रान्तकान्तारदेशा इति । हासो हस्ताग्रसंवाहनमपि तुलिताद्रीन्द्रसारद्विषोऽस्येति । वैरञ्चानां तथोच्चारितचतुरऋचां चाननानां चतुर्णामिति । खड्गे पानीयमाह्लादयति हि महिषं पक्षपाती पृषत्क इति ।

**स्यात् पूर्वोत्तरभागस्थैकाक्षरत्वे तु नो यतिः ॥ १४ ॥**

पूर्वभागस्थैकाक्षरत्वे यथा—

एतस्या गण्डतलममलं गाहते चन्द्रकक्षामिति । एतासां राजति सुमनसां बामकण्ठावलम्बीति ।

उत्तरभागस्थैकाक्षरत्वे यथा—

सुरासुरशिरोरत्ननिघृष्टचरणारविन्दः शिवः ॥ इति ।

**पादान्तेऽपि पदमध्ये न प्रायः क्रियते यतिः ।**

यथा—

प्रणमत भवबन्धक्लेशनाशाय नारायणचरणसरोजद्वन्द्वमानन्दहेतुमिति ।

**सन्धौ स्वरः क्वचित्पूर्वान्तवत्क्वचित्परादिवत् ॥ १५ ॥**

पूर्वान्तवद्यथा—

स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ।
जम्भारातीभकुम्भोद्भवमिव दधतः ॥ इति ।
दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ॥

परादिवद्यथा—

स्कन्धे विन्ध्याद्रिबुद्ध्या निकषति महिषस्याहितोऽसूनहार्षीत् ॥ इति ।

**न पूर्वोत्तरभागस्थैकाक्षरे स्वरसन्धयः ।**

यथा—

अस्या वक्त्राब्जमवजितपूर्णेन्दुशोभं विभाति ॥ इति ।

**स्यात्सन्धौ व्यञ्जनं याद्यादेशोऽपि च परादिवत् ॥ १६ ॥**

सन्धौ व्यञ्जनं यथा—

शूलं तूलं तु गाढं प्रहर हर हृषीकेश केशोऽपि वक्रश्चक्रेणाकारि किं ते इति ।

याद्यादेशोऽपि यथा—

अच्छिन्नप्रसराणि नाथ भवतः पातालकुक्षौ यशांस्यद्यापि क्षपयन्ति कोकिलकुलच्छायासपत्नं तमः ॥ इति ।

विततघनतुषारक्षोदशुभ्रांसु दूर्वास्वविरलपदमालामुज्ज्वलामुल्लिखन्तः । इति ।

**सम्बद्धानामुत्तरेण पादेनैकचरस्पृशाम् ।**
**प्रादीनां पूर्वपादान्ते यतिर्न क्रियते क्वचित् ॥ १७ ॥**

यथा—

दुःखं मे प्रक्षिपति हृदये दुःसहस्त्वद्वियोगः ॥

**पूर्वपदसम्बद्धानामनेकाक्षराणां तु क्रियते ।**

पूर्वपदसम्बद्धानां यथा—

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ॥

अनेकाक्षराणां तु यथा—

दूरारूढप्रमोदं हसितमिव परिस्पृष्टमासां सखीभिः ॥ इति ।

**प्राक्पदाश्रितैकाक्षरं चादेः पूर्वन्तु नो यतिः ॥ १८ ॥**

यथा—

स्वादु स्वच्छं च सलिलमिदं प्रीतये कस्य न स्यात् ॥

**अप्राक्पदसम्बद्धस्यानेकाक्षरस्य तु पूर्वं भवति ।**

यथा—

मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ।
प्रत्यादेशापि च मधुनो विस्मृतभ्रूविलासम् । इत्यादि ।

**इत्याद्यौचित्यतो ज्ञेया यतिः श्रुतिसुखा बुधैः ॥ १९ ॥**

यदुक्तम्—

अवह्वर्थाऽपि मधुरा मनो हरति भारती ।
तमोनिचयसङ्काशा मत्तनादेव कोकिला ॥ ५७ ॥

इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां
काव्यकल्पलताकविशिक्षावृत्तौ छन्दःसिद्धिप्रताने
छन्दोऽभ्यासस्तबको द्वितीयः ॥ २ ॥



## अथ प्रथमप्रताने तृतीयः स्तबकः

अथ छन्दःपूरणाय सामान्यशब्दाः—

**छन्दःस्वनुष्टुब्मुख्येषु शब्दाः शीघ्रत्वसिद्धये ।**
**क्रमाक्रमोचिता ज्ञेयाः सामान्यैकाक्षरादिकाः ॥ १ ॥**

**प्रथमेऽनुष्टुभः पादे क्रमादेकाक्षरादयः ।**
**व्यतिक्रमाच्च कथ्यन्ते शब्दाः साधारणा यथा ॥ २ ॥**

प्रथमैकाक्षरम्—

श्री, सं, सन्, द्राक्, विश्, आ, नि, श्राक्, सु, उत, तद्, ।

आद्याक्षरद्वयम्—

श्रीमत् श्रेष्ठम् ज्येष्ठम् प्रेष्ठम् प्राज्यम् प्रौढम् सारम् स्फारम् तारम् रुच्यम् धुर्यम् वर्यम् । रम्यम् काम्यम् कम्रम् कान्तम् हृद्यम् हारी मञ्जु चारु वल्गु सत्यम् नित्यम् कामम् चश्वत् वल्गत् स्फूर्जत् क्रीडत् सदा स्वयम् स्फुटम् ध्रुवम् भृशम् रयात् जवात् परम् वरम् महत् पटुः बहु स्फुरत् लसत् लुलत् ललत् ।

आद्याक्षरत्रयम्—

निःशङ्कम् सच्छायः सच्छोभम् शोभाढचम् वेगेन श्रीप्राज्यम् विस्फूर्जत् विक्रीडत् । प्रोद्दाम प्रोत्तुङ्ग प्रोत्ताल प्रक्रीडत् सपदि प्रकटम् विकसत् विलसत् निकामम् नितान्तम् प्रकामम् प्रसर्पत् उदञ्चि विसर्पि रवेण जवेन सर्वदा सर्वथा सर्वतः सत्वरम् निश्चितम् वेगतः विस्फुरत् प्रोल्लसत् ।

आद्याक्षरचतुष्टयम्—

रयादेव जवादेव सर्वकालम् सुनिश्चितम् । स्फारशोभः प्रभायुक्तः स्फूर्जच्छायः श्रियान्वितः ।

चतुर्णामग्रे एकाक्षरम्—

हि तु न च स च ।

चतुर्णामग्रेऽक्षरद्वयम्—

रयात् स्वयम् स्फुटम् भृशम् सदा अन्वहम् जवात् महत् वरम् परम् ध्रुवम् द्रुतम् स्फुरत् लसत् लुलत् मिलत् ललत् ।

चतुर्णामग्रेऽक्षरत्रयम्—

रवेण जवेन प्रभावविभावौ सशोभसलक्ष्म्यौ वितानप्रपञ्चौ ।

चतुर्णामग्रे चतुरक्षराणि—

रयादेव जवादेव वराभोगबहुश्रीकौ लसच्छ्रीकलसल्लक्ष्म्यौ स्फुरच्छोभवरच्छायौ ।

अथ व्यतिक्रमेणाक्षराणि—

अन्त्याक्षरम्—श्रीः त्विट् द्युत् जुष् ।

अन्त्याक्षरद्वयम्—सम्यक् वेगात् प्रौढम् प्राज्यम् सत्यम् नित्यम् कामम् कान्तम् श्रीमान् शीघ्रम् श्रेष्ठम् स्फारम् तारम् वर्य्यम् हृद्यम् ।

अन्त्याक्षरत्रयम्—उत्तालः सल्लक्ष्मीः सश्रीकः उद्दामः शोभाढ्यो लक्ष्मीवान् उच्छायः सच्छायः सच्छोभः काम्यश्रीः वर्यश्रीः रम्यश्रीः । शब्दाः पूर्वोदिता एव व्यतिक्रमे चतुरक्षराः ॥

अन्त्याक्षरपञ्चकम् ।

प्रवरश्रीकम् रुचिरच्छायम् स्फुटलक्ष्मीकम् रयतः सम्यक् वेगतः श्रीमान् कलया युक्तः सततं कान्तः प्रकटच्छायः ।

अन्त्याक्षरषट्कम्—

उदञ्चितच्छायः चारुतरच्छायः स्फुरितलक्ष्मीकः रम्यतमश्रीकः प्रौढश्रिया युक्तः वरतराटोपः कान्ततमश्रीकः प्रकटशोभाढ्यः ।

सकलोऽपि पादः—समुल्लसितशोभाढ्यः । चारुचञ्चत्कलाशाली । उद्यद्वुद्य-तरस्फूर्तिः । वल्गुवल्गद्वपुर्लक्ष्मीः । विभासम्भारसंशोभी । प्रभाप्रभावसम्भाव्यः । विभाप्राग्भारसारश्रीः । रोचिः सञ्चयरोचिष्णुः ।

**द्वितोयेऽनुष्टुभः पादे यावदेवाक्षरत्रयम् ।**
**विज्ञेयं पूर्वपदोक्तं कथ्यन्ते चतुरक्षराः ॥ ३ ॥**

सर्वकालं सर्वदैव रयादेव जवादेव शोभायुक्तः झटित्येव रयादिह जवादिह । प्रौढलक्ष्मीः स्फूर्जच्छायः बहुश्रीकः वरच्छायः वराभोगः महाभोगः प्रकटश्रीः विकटार्चिः ।

चतुर्णामग्रतः पूर्वपादस्यैवाक्षरत्रयम् । चतुर्णामग्रे चत्वारि—रयादहो जवादहो मनोरमं मनोहरं समन्ततः झटित्यपि वरद्युतिः महामहाः ।

अथ व्यतिक्रमेणान्त्याक्षरम्—

भाक् जुष् रुक् हृत् भृत् वृत् मद् वत् भू दक् ज हि वै हे भो हा तत् स सा याप्य सा वदो य म ये अरे ।

अन्त्याक्षरद्वयम्—

स्फुटम् भृशम् द्रुतम् ध्रुवम् स्वयम् रयात् जवात् अलम् सदा सना शनैः अरम् परम् चिरात् शुभम् वरम् ।

अन्त्याक्षरत्रयम्—

सर्वदा सर्वतः सर्वथा नित्यशः सत्वरं सन्ततं निश्चितं वेगतः उच्चकैः अञ्जसा शीघ्रतः सुन्दरं पेशलं कोमलं निर्मलं मञ्जुलम् । व्यतिक्रमेऽपि चतुरक्षरशब्दाः पूर्वोक्ता एव ।

अन्त्याक्षरपञ्चकम्—

मञ्जुलस्थितिः सुन्दरद्युतिः प्रवरच्छविः श्रेष्ठवैभवः कोमलक्रमः प्रसरद्रुचिः प्रभवत्प्रभः प्रसरद्रसः कान्तिमण्डितं द्युतिसुन्दरं छविराजितं प्रभयान्वितं नववैभवः विभवद्विभः स्फुरितोदयः विकटोच्छ्रयः ।

अन्त्याक्षरषट्कम्—

सुन्दरदीधितिः अद्भुतवैभवः भूरितरद्युतिः उद्यतभाततिः कान्तिनिकेतनम् इद्धतमक्रमः चारुतरच्छविः अक्षिमहोत्सवः ।

सकलपादः—

रोचिर्निचयरोचितः, कान्तकान्तिनिकेतनम्, द्युतिमण्डलमण्डितः, विभावैभवभासुरः, विभवद्भूरिविभवी, मनोहारितमक्रमः, महामहिममन्दिरम्, महोदयमहोमयः ।

पादद्वयम्—

चमत्कारकरस्फारप्रभाप्राग्भारभासुरः ।
मनोरमतमक्रीडत्कान्तिमण्डलमण्डितः ॥ १ ॥

मनोहरतरस्फूर्जदूर्जस्वलकलोज्ज्वलः ।
नयनानन्दनोद्दामरामणीयकमन्दिरम् ॥ २ ॥

विस्फुरद्रश्मिविस्मेरविस्मयाविष्टविष्टपः ।
प्रीतिस्फीतिकरप्रेङ्खत्प्रभासंहतिसंहृतः ॥ ३ ॥

मनोहारिमदोच्छ्रायकायच्छायचयान्वितः ।
अत्यद्भुतवपुःशोभासम्भ्रान्तभुवनत्रयः ॥ ४ ॥

**एवं साधारणैः शब्दैरौचित्येन नियोजितैः ।**
**दक्षाश्छन्दःसु सर्वेषु कुर्वन्ति पदयोजनाम् ॥ ४ ॥**

अथेन्द्रवज्रायां पूर्वाक्षरद्वयम्—

उद्यत् माद्यत् चञ्चत् राजत् रङ्गत् सर्पत् भास्वत् ।

आद्यमक्षरत्रयम्—

भ्राजिष्णु विभ्राजि रोचिष्णु प्रधानः प्रशस्य वर्द्धिष्णु संशोभि ।

आद्यमक्षरचतुष्टयम्—

स्फारस्फुरत् प्रौढोल्लसत् वर्योदयत् स्पष्टस्फुरत् ।

अक्षरपञ्चकम्—

विस्मेरशोभः प्रोल्लासिलक्ष्मीः उत्सर्पिशोभः स्मेरप्ररोहत् ।

अक्षरपञ्चकात्—

बहु दृढ गुरु जव वर स्फुट घन स्मितम् ।

अक्षरपञ्चकात्—

निबिड बहुल रुचिर सुभग विमल प्रवर प्रकट प्रबल प्रचुर प्रसृत प्रसभ प्रभवत् विलसत् विकसत् विहसत् बिचरत् प्रचरत् प्रसरत् ।

अन्त्याक्षरत्रयम्—

प्रधान प्रशस्य प्रभाव विभाव प्रवीण शुभयोः परश्रीः सुशोभः स्फुटश्रीः प्रसर्पत् प्ररोहत् विसर्पत् विकासि विलासि विसर्पि विसारि ।

उपेन्द्रवज्रायां पूर्वाक्षरद्वयम्—

लसत् मिलत् स्फुरत् ज्वलत् स्फुटं ध्रुवम् ।

आद्यवर्णत्रयम्—प्रधान प्रशस्य प्रवीण धुरीण प्रवेक विकासि बिसर्पि विलासि ।

आद्यवर्णचतुष्टयम्—वरोदयत् स्फुटस्फुरत् परिस्फुरत् लसद्विभा मिलत्प्रभा ।

आद्याक्षरपञ्चकम्—

उदारसर्पत् उदञ्चितश्रीः विसर्पिलक्ष्मीः विकासिशोभा वरप्ररोहत् । शेषमिन्द्रवज्रावत् ।

इन्द्रवज्रोपेन्द्रवज्राभ्यामुपजातिश्छन्दः ।

रथोद्धतायामाद्यमक्षरद्वयम् ।

प्राज्य स्फार प्रौढ स्पष्ट चारु हारि तार हृद्य रम्य सर्पि स्मेर ।

आद्याक्षरत्रयम्—

विस्फुरत् सञ्चरत् प्रोल्लसत् पेलवं सुन्दरं मञ्जुलं अद्भुत उत्कट उच्छ्रित ।

अक्षरत्रयाग्रे—नबलसत् दृढमिलत् बरतर नवमह गुरुतर गुरुतम ।

सप्तानामग्रे—

मनोहरं महामहः वरद्युतिः शुभच्छविः गुणालयः । श्रिया युतः स्फुरन्महाः जयोच्छ्रितः गुणोज्ज्वलः । स्वागतायां सप्ताक्षराणि यावद्रथोद्धतावत् ।

अन्त्यवर्णचतुष्टयम् । यथा स्फुटलक्ष्मीः गुणरम्यः प्रवरश्रीः वरशोभः रुचिरश्रीः परिसर्पत् नवराजत् वरवल्गत् ।

शालिन्यां प्रथमाक्षरद्वयम् ।

सत्यं नित्यं शश्वत् सर्पत् राजत् क्रीडत् रङ्गत् वल्गत् प्रेङ्खत् ।

आद्यमक्षरचतुष्टयम् ।

स्फारस्फूर्जत् लीलोन्मीलत् चारूदञ्चत् प्रौढप्रेङ्खत् उच्चैश्चञ्चत् वल्गुवल्गत् चञ्चल्लक्ष्मीः स्वच्छच्छायः ।

चतुर्णामक्षराणामग्रे ।

चारु हारि सर्पि स्मेर स्फार वल्गु रम्य नव्य ।

चतुर्णामग्रे ।

विस्फुरत् प्रोल्लसत् सञ्चरत् पेलव पेशल सुन्दर मञ्जुल प्रेङ्खित स्मेरित ।

सप्तानामग्रे । भ्राजमान राजमान स्फारशोभः शोभमानः दीप्तरूपः स्फाररूपः प्राप्तलीलः प्रौढलक्ष्मीः मञ्जुलश्रीः ।

वसन्ततिलकायां चतुर्णामक्षराणामग्रे लघ्वक्षरत्रयम् ।

सपदि प्रभवः प्रसरत् प्रवर विमल बहुल ।

चतुर्णामग्रे । दृढमिलत् परिलसत् वरमहाः वरगुणः नवरुचि प्रसृमर शुचितम वरतर परिमल परिचय सुनिविड प्रतिपद प्रतिदिन ।

अन्यदिन्द्रवज्राप्रान्त्यषडक्षरवत् ज्ञातव्यम् ।

मालिन्यामाद्यमक्षरद्वयम्—

बहु दृढ स्फुट घन ।

आद्यमक्षरत्रयम् । निबिड प्रसृत बहुल प्रवर ।

आद्यमक्षरचतुष्टयम् । प्रसृमर अविरल सुनिविड घनतर ।

आद्यमक्षरपञ्चकम् । बहुलतम, प्रकटतर, अतिनिविड, अधिकशुभ ।

अद्यमक्षरषट्कम् । अविरलतम प्रसृमरतम बहुलनिविड अधिकरुचिर ।

आद्याक्षराष्टकम् । अविरलतरसर्पत् अतिरुचिरविसर्पत् बहुलनिबिडराजत् प्रसृमरतरचञ्चत् ।

अष्टानामक्षराणामग्रे । हृद्य रम्य तार मार ।

अष्टानामग्रे । सप्रभः सच्छविः प्रोत्कट विस्फुरत् ।

एकादशानामग्रे । राजमान प्रौढशोभ प्राप्तलील स्फाररूप ।

व्यतिक्रमेणान्त्याक्षरद्वयम् । रम्य हृद्य सार चारु ।

अन्त्याक्षरत्रयम् । प्रधान प्रशस्य प्रवीण स्फुटश्रीः सशोभ वरश्रीः ।

चतुरक्षरास्त एव राजमानप्रभृतयः ।

अन्त्याक्षरपञ्चकम् । विभ्राजमान विस्फारशोभ विस्तीर्णलक्ष्मीः संशोभमान ।

अन्त्याक्षरसप्तकम् । राजमानप्रभाव द्योतमानप्रपञ्च स्फायमानस्वरूप श्रेणिसंरम्भरम्यम् ।

अन्त्याक्षरनवकम् । लीलारोचमानप्रपञ्च मालाशोभमानान्तरालं शोभा-वैभवभ्राजमानं राजीराजमानस्वरूपम् ।

अन्त्याक्षरदशकम् । विलासारम्भसंरम्भरम्यम्, विभावाभोगसौभाग्ययुक्तम्, समूहोल्लास्यमानप्रभावम्, वितानोत्तायमानस्वरूपम् । अन्त्यैकादशाक्षराणि । परिणाहस्फीतलक्ष्मीविलासम्, परिणामभ्राजितोद्दामशोभम्, निकुरम्बाडम्बरभ्राज-मानम्, समुदायस्फायमानप्रमोदम् ।

शिखरिण्यामाद्यमक्षरद्वयम् । लसत् मिलत् चलत् ललत् स्फुरत् स्फुटम्, ध्रुवम्, द्रुतम्, भृशम्, स्वयम् ।

आद्यमक्षरत्रयम् । विसर्पत् प्ररोहत् विराजद् नितान्तम्, प्रकामम्, स्फुटोद्यत् ।

आद्याक्षरचतुष्टयम् । स्फुटस्फूर्जत् स्फुरल्लक्ष्मीः विसर्पिश्रीः वरच्छायः नवोन्मीलत् परिक्रीडत् नवप्रेङ्खत् नवोदञ्चत् ।

आद्यमक्षरषट्कम् । प्रकामस्फूर्जत् समुन्मीलल्लोला नवप्रेङ्खल्लक्ष्मीः परिस्फूर्जच्छायः स्फुटश्रीरोचिष्णुः ।

षण्णामग्रे । प्रसृमर विसृमर प्रकटित वरतर वरतम ।

षण्णामेवाग्रे । परिलसित नवललित प्रसृततर निचिततर निचिततम ।

षण्णमग्रे । प्रबलविलसत् प्रचुरविचरत् नवपरिलसत् घनतरचरत् नव-परिलसत् घनपरिचरत् ।

षण्णामग्रे । प्रकटतरलक्ष्मीः विकसितनवश्रीः विशदतरशोभः ।

त्रयोदशानामग्रे । नवमहाः शुभरुचिः स्फुटगुणः विकसित विलसित ।

हरिण्यां पूर्वाक्षरषट्कम् । रुचिरविचरत् विमलविलसत् नवनवमिलत् । षण्णामग्रे । विभ्राजिष्णुः संवर्द्धिष्णुः नव्योन्मीलत् प्रौढक्रीडत् चारूदञ्चत् स्फारस्फूर्जत् ।

दशानामग्रे। प्रधान प्रशस्य प्रवीण प्ररूढ विसर्पि विसारि विलासि विराजि ।

दशानामग्रे। मनोहर विकस्वर नवोदित शुभोच्छ्रित प्रकाशित।

दशानामग्रे। वरप्रचरत् नवप्रसरत् विसर्पिरुचिः विलासिमहः।

दशानामग्रे। विकस्वरवैभवः स्फुटस्फुरितोदयः प्रशस्यरुचिरस्थितिः श्रिया परिलासितः।

मन्दाक्रान्तायामाद्यमक्षरद्वयम्। उद्यत् माद्यत् राजत् रङ्गत् प्रेङ्खत् क्रीडत् भ्राजत्।

आद्याक्षरचतुष्टयम्। स्फारस्फूर्जत् वल्गुवल्गत् उच्चैश्चञ्चत् लीलोन्मीलत् चञ्चल्लक्ष्मीः।

चतुर्णामग्रे। बहु दृढ घन पर।

चतुर्णामग्रे। निबिड बहुल प्रसृत स्फुरित रुचित।

चतुर्णामग्रे। घनतर बहुतम सुनिबिड विसृमर।

चतुर्णामग्रे। प्रवरविलसत् रुचिरविचरत् स्फुटतररुचिः, बहुतममहः।

दशानामग्रे। शेषं मालिनी प्रान्तसप्ताक्षरवत्।

आद्यवर्णदशकम्। उच्चैश्चेतोहरपरिलसत् विश्वानन्दप्रदसमुदयम्, प्रौढ-प्रीतिप्रदविसृमर, हर्षोत्कर्षप्रकटनलसत्।

शार्दूलविक्रीडिते आद्यवर्णत्रयम्।

प्रक्रीडत् प्रोन्मीलत् प्रस्फूर्जत् उत्प्रेङ्खत् नव्योद्यत् स्फारश्रीः चारुश्रीः लक्ष्मीवान् सच्छायः शोभावान्।

आद्याक्षरचतुष्टयम्। चञ्चच्चारु रङ्गत्तुङ्ग प्रेङ्खत्तार स्मेरोद्दाम विभ्राजिष्णुः संवर्द्धिष्णु स्फारस्मेर।

आद्यपञ्चाक्षराणि। लीलोन्मीलित उच्चैश्चुम्बित स्फारस्मेरित चारूदञ्चित।

आद्यषडक्षराणि। उद्दामप्रसरत् प्रोत्तालप्रमिलत् प्रावीण्यप्रचलत् नव्योत्सर्पिरुचिः।

षण्णामग्रे। प्रचारि प्रसारि विसर्पि मनोज्ञ प्रशस्य प्रधान प्ररोहि विवर्द्धि विलासि।

नवानामग्रे। विलसत् विकसत् विहसत् विचरत् रुचिर सुभग बहुल विमल विभव।

द्वादशानामग्रे । स्फारस्फुरत् स्फूर्जन्महाः क्रीडद्गुणः प्रौढोद्यत् रम्योदयत् ।

द्वादशानामग्रे । प्रौढप्रसर्पत् भ्राजिष्णुलक्ष्मी भास्वद्विभाव प्रौढप्रभाव स्फुटप्रकाश ।

पञ्चदशानामग्रे । सारद्युति सर्पद्गुण रङ्गद्रुचि तारोद्यत् विभ्राजित संशोभित ।

स्रग्धरायां पूर्वं चतुरक्षराणि । स्फारस्फूर्जत् लीलोन्मीलत् सर्पल्लक्ष्मीः प्रोल्लासिश्रीः ।

चतुर्णामग्रे । प्रसर्पत् विराजत् स्फुटश्रीः । वरेण्य प्रशस्य प्रधान ।

सप्तानामग्रे । वरतर स्फुटतम प्रसृमर विसृमर त्रिकसित विलसित प्रकटित ।

एकादशानामग्रे । विलसत् विकसत् बिचरत् सुभग विमल विशद बहुल रुचिर ।

चतुर्दशानामग्रे । वल्गुवल्गत् चारुचञ्चत् सारसर्पत् प्रौढलक्ष्मीः स्फारशोभ ।

अष्टादशानामग्रे । प्रकामम्, नितान्तम्, विसर्पत् प्रसर्पत् । इत्यादि । एवमन्यच्छन्दःस्वपि ज्ञेयम् ।

**दीर्घह्रस्वाक्षरद्वन्द्वगणप्रस्तारतः क्रमात् ।**
**ज्ञेयाः साधारणाः शब्दाः सर्वच्छन्दोऽभियुक्तये ॥ ५ ॥**

एते शब्दा मत्कृतकाव्यकल्पलतापरिमलात् ज्ञेयाः ।

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रबिरचितायां
काव्यकल्पलताकविशिक्षावृत्तौ छन्दःसिद्धिप्रताने
प्रथमे सामान्यशब्दस्तबकस्तृतीयः ॥ ३ ॥

## अथ प्रथमप्रताने चतुर्थस्तबकः

अथ वादशिक्षा ।

**वादेऽनुप्रासयुक्तोक्तिः स्वोत्कर्षः परगर्हणा ।**
**कुलशास्त्रादिसम्प्रश्नः स्वशास्त्राध्ययनप्रथा ।। १ ।।**

अनुप्रासयुक्तोक्तिर्यथा—

जल्पामि कल्पामितश्रीर्ब्रूमो भ्रूमोटनाश्रिताः ।
वदामि दामि भो जल्पिष्यामि श्यामितशात्रवः ।। १ ।।

जल्पामोऽनल्पसम्बोधवादसादरनादभृत् ।।

**एवं शब्दाः सानुप्रासाश्चिन्त्या वादोक्तियुक्तये ।**

कियन्तोऽपि सानुप्रासाः शब्दाः, यथा—

सूरि भूरि पूरित सूरीणाम्, दूरि कुरी क्रूरीकृतम्, दम्भ जम्भ रम्भ लम्भ भम्भ क्रूर तूर पूर सूर पूरण क्षोभ लोभ प्रेम स्थेम हेम क्षेम हेमया येमया खेमहः ते महान्तः प्राज्ञ मान्य धान्य नान्य तान्यव्यवस्थापयन् भूप स्तूप धूप यूप कूप रूप सूपकार भूम्याम् धूम्याम् अवन्याम् वन्याम् गुर्वी उर्वी उर्वीधर क्षोणी श्रोणी शोणीकृत द्रोणी क्ष्मायाम् मायाम् छायाम् जायाम् सायान्धतमसम् व्योम सोम रोम स्तोम कोमल लोम कोमया यो महान् उक्ति युक्ति भुक्ति शुक्ति मुक्ति सोहम् मोहम् द्रोहम् दोहम् कोहङ्कारः दोह लोह दोहद सन्देह सन्दोह दुग्ध मुग्ध स्निग्ध विदग्ध दात्र गात्र पात्र क्षात्र नात्र छात्र मात्र शात्रव गोत्र स्तोत्र कोत्र पोत्र योत्र होत्र कुर्याम् माधुर्यम् चातुर्यम् तुर्यम् पुर्याम् काव्यम् श्राव्यम् नाव्यम्, क्रव्यम् वाद नाद माद साद सादर छाद शाद यादः पाद अब्द शब्द ध्यान अध्यान ध्मान गान ज्ञान वान स्थान पान भान मान यान घोष जोष तोष दोष शोष पोष लीला कीला कोलाहल गोला दोला तोलन लोलुप मन्द्र चन्द्र तन्द्र चन्द्रमाः सान्द्र पद्र भद्र मद्र वाचः काच प्राचलत् साच वाचि काचित् साचि वाचाल वाचाट प्राचालीत् प्राणी वाणी बाणी पाणी कृत्या भारत्या क्षारत्यागम्, भाषा शाखा गावो नावो प्रस्ताव स्थावर दाव पावन भाव राव हाव सरस्वत्या सत्यापितनत्या हत्या पत्या मत्या रत्या गीर्वाण गोर्वाण कविता भविता सविता पविता रचिता पाता नैव दैव सैव धीर कीर क्षीर चीर जीरक तीर नीर वीर सीर हीर कोटीर कुटीर वानीर महीरमण आरब्ध लब्ध स्तब्ध वर्ण कर्ण अर्ण वर्णक तर्णक अर्णक

पर्णक अर्णव स्वर्ण पण्डित खण्डित दण्डित मण्डित क्रुद्ध बुद्ध रुद्ध शुद्ध प्रबुद्ध युद्ध उद्धव मालती भारती व्रतती कृती कवि गबि छवि पवि रवि रिक्त सिक्त विविक्त द्वेधा त्रेधा वेधा मेधा मेधाबी आतुर चतुर कोत्र क्षेत्र तेत्र वेत्र नेत्र येत्र क्षत्र क्षेत्रज क्षेत्रज्ञ धर्म चर्म नर्म शर्म मर्म कर्म धर्म हर्म्य दक्ष कक्ष वक्ष यक्ष पक्ष रक्ष भक्ष कुशलव कल गल दल पल उपल फल बहुल हल गेय जेय देय ज्ञेय धेय नेय पेय हेय मेय बिधेय पारीण प्रवीण धुरीण दर्प कर्पर खर्पर तर्पण दर्पण अर्पण सर्पण सर्प तर्प विनद छद पद मद रद गान तान स्त्यान दान मान पान खान रान लान भान सर्व गर्व खर्ब पर्व चर्बण अथर्वण अहङ्कार हुङ्कार ओङ्कार आकार कोप गोप आटोप रोप क्रोध बोध योध रोध शोध उत्कर्ष अमर्ष अपकर्ष काय उपाय ।

स्वोत्कर्षो यथा—

ज्योतिषामिव तिग्मांशुस्ताराणामिव चन्द्रमाः ।
सैन्येशानामिव स्कन्दः कवीनामहमुत्तमः ॥ २ ॥

प्रशंसाहेतोः सारसङ्ग्रहो यथा—

वसूनां पावकश्चन्द्रस्ताराणां ज्योतिषां रविः ।
रुद्राणां शङ्करो यक्षरक्षसां धनदोऽपि च ॥ ३ ॥
गन्धर्वाणां चित्ररथो बृहस्पतिः पुरोधसाम् ।
महर्षीणां भृगुमुनिर्देवर्षीणां च नारदः ॥ ४ ॥

सैन्येशानां कार्तिकेयो मरीचिर्मरुतामपि ।
सिद्धानां कपिलो व्यासो मुनीनां वेगिनां मरुत् ॥ ५ ॥

यादसां वरुणोऽनन्तो नागानां रूपिणां स्मरः ।
सर्पाणां वासुकिः शुक्रः कवीनां नृपतिर्नृणाम् ॥ ६ ॥

सर्बशस्त्रभृतां रामः पाण्डवानां धनञ्जयः ।
सर्वायुधानां दम्भोलिः पक्षिणां गरुणस्तथा ॥ ७ ॥

उच्चैःश्रवास्तुरङ्गाणां गजानामभ्रभूपतिः ।
विद्यानामध्यात्मविद्या गायत्री छन्दसामपि ॥ ८ ॥

झषाणां मकरः सिंहो मृगाणां कामधुग् गवाम् ।
पर्वतानां मेरुगिरिः स्थावराणां हिमालयः ॥ ९ ॥

नदीनां जह्नुतनया सरसां सरिताम्पति ।
अक्षराणामकारश्च भूतानामपि चेतना ॥ १० ॥

वेदानां सामवेदोऽपि मासानां मार्गशीर्षकः ।
यज्ञानां जपयज्ञश्च श्रीवृक्षः सर्वशाखिनाम् ॥ ११ ॥
वसन्तः सकलर्तूनामोषधीनां यवोऽपि च ।
तृणानां दर्भो धातूनां स्वर्णं खानां मनस्तथा ॥ १२ ॥

प्रशस्यः पर्जन्यो भुवनजनने जीवनसृजां
सुधांशुर्धिष्ण्यानां पवनपथरत्नं द्युतिमताम् ।
गिरीणां स्वर्णाद्रिर्मणिसमुदयानां सुरमणि-
र्द्रुमाणां कल्पद्रुः सुकविनिवहानामहमहो ॥ १३ ॥

इतरेषामपि वर्ण्यानामुत्कर्षायोपमानान्येतानि कल्पनीयानि । यथा—

पीयूषमोषधिषु शाखिषु कल्पशाखी चिन्तामणिर्मणिषु धेनुषु कामधेनुः ।
ध्यानं तपस्सु सुकृतेषु कृपा व्रतेषु ब्रह्मव्रतं क्षितिपतित्वमुरीकरोतु ॥१४॥

वृषो विषाणप्रहृतीस्तनोत्यहो जयेहया जम्भनिशुम्भकुम्भिनः ।
मया समं तत्त्वमतत्त्ववित्तमो मुधा कृतोन्मादविवादसादरः ॥ १५ ॥

त्वयाब्धेरारब्धं करचरणचारेण तरणं
करेणोपक्रान्तं स्थगनकरणं चाम्बरमणेः ।
शिरोग्रेण स्वर्गाचलदलनमङ्गीकृतमहो
मदोग्रेण ध्याता यदिह मम वादेन समता ॥ १६ ॥

वदामो यद्दामोदरपदसरिद्वीचिपटल-
प्रगल्भाभिर्वाग्भिर्भवति मतिहीने सति पुनः ।
तदन्धाग्रे नृत्यं बधिरपुरुषे मन्त्रकरणं
दृषत्पेषोत्कर्षो गगनहननं मुष्टिनिवहैः ॥ १७ ॥

प्रारेभे सिकताकणाशनमिदं प्रोद्दामदावानल-
ज्वालालिङ्गनमुग्रशेषतरलव्यालावलीखेलनम् ।
सन्तप्तत्रपुपानकर्म भवता यद्विश्वविश्वम्भरा-
विद्वद्वन्द्यपदद्वयस्य मम भो वादोक्तिरङ्गीकृता ॥ १८ ॥

पक्षीन्द्रपक्षैरवतंसकाङ्क्षा स्वर्दन्तिदन्तैः मितकुण्डलाशा ।
गजास्यकुम्भस्थलमौक्तिकौघैर्हारस्पृहा मज्जयमीहसे यत् ॥ १९ ॥

हस्तप्रस्तरताडनेन हि कृतः कृष्णाहिरुद्यत्फणः
सिंहः स्वाङ्घ्रिमहाप्रहारविधिना सुप्तः सुखं बोधितः।
वातस्याभिमुखस्थितेन भवता दावाग्निरुज्ज्वालितो
वादोन्मादवशंवदेन यदहं साटोपमाकोपितः॥ २०॥

जातिः सातिशया तव स्फुरति का श्रीसङ्कुलाङ्किङ्कुलं
देशः क्लेशनिवेशलेशरहितः कः सुन्दरङ्घ्रि पुरम्।
शास्त्रेष्वत्र पवित्रता मतिरपि प्रौढप्ररूढैर्गिरां
भारैः सारतरं विशारद वद प्रीत्यै मम प्रोन्मदः॥ २१॥

किं त्वं लक्षणदक्षिणोऽसि किमु वा साहित्यसौहित्यभू-
श्छन्दःकन्दलितोऽसि किं च किमु वाऽलङ्कारसारस्थितिः।
किं वा तर्हि वितर्ककर्कशमनाः किं ज्ञानविज्ञानवान्
यज्जानासि सभां जयेयमिति भोः सर्वं सगर्वं वद॥ २२॥

सर्वव्याकरणार्णवान्तरमपि क्षोभोद्यमैर्निर्मला
छन्दःप्रावरणोत्थितावपि विधाऽलङ्कारतारप्रभा।
षट्कर्मीमकरन्दसङ्गसुरभिः स्फूर्जत्कलाशालिनी
काप्येषा मम शेमुषी सुमनसां स्वान्तानि हन्तुं क्षमा॥ २३॥

अग्रे यस्य न कोऽपि रोपितपदो विद्वान् परप्रातिभ-
प्रौढिप्राभृतकीकरोति निभृतं भानोरिवोडुव्रजः।
सोऽहं मोहतमःप्ररोहदमनः प्रागल्भ्यसम्यक्स्फुरद्-
वाग्दीप्तिप्रसरप्रकाशितसुहृद्वृन्दारवृन्दारकः॥ २४॥

परगर्हणा यथा—

कृष्णसर्पस्य मण्डूकश्चपेटां दातुमुद्यतः।
रे मूढ यन्मया सार्द्धं विवादं कर्तुमिच्छसि॥ २५॥

एवं वृषभः सुरदन्तिनं विषाणैः प्रहर्तुं, द्विपो दन्ताभ्यां गिरिं पातयितुं, शशकः कराभ्यां सिंहस्कन्धकेसरान् क्रष्टुं, मूषकः स्वदन्तैर्मार्जारदंष्ट्रां पातयितुमुद्यत इत्यादि। तथा—

तुलया तोलनं मेरोः करेण स्थगनं रवेः।
मानं व्योम्नोऽङ्गुलीभिर्यत् प्रेप्सुर्वादेन मज्जयम्॥ २६॥

एवं बाहुभ्यामब्धेस्तरणम्, शिरसा गिरेर्भेदः, पद्भ्यां नद्याः प्रतिस्रोतोगतिरित्यादि। तथा—

इदं पाषाणदलनमन्धस्यालेख्यदर्शनम् ।
मन्त्रणं बधिरैर्मूढ त्वया वादं तनोमि यत् ।। २७ ।।

एवं जलविलोडनं व्योमहननं निर्द्धनदण्डनं मृगतृष्णायां जलादानमिति । तथा—

खड्गधाराग्रसञ्चारमयश्चणकचर्वणम् ।
अङ्गारशयनम्प्रेप्सुर्यत्त्वं मज्जयमीहसे ।। २८ ।।

एवं सिकताकणभुक्तिस्तप्तत्रपुपानम्, दवानलज्वालालिङ्गनम्, कृष्णसर्पमुखचुम्बनम्, व्यालखेलनमित्यादि । तथा—

करेण काङ्क्षासि क्रष्टुं भूस्थः स्वर्गद्रुमञ्जरीम् ।
वादेन यदसौ मूढ जिघृक्षुर्मज्जयश्रियम् ।। २९ ।।

एवं शेषशेखरमणिं गरुडपक्षैरवतंसं ऐरावणदन्तैस्ताटङ्कं कृतान्तमहिषेण पानीयमानयितुं सिंहदंष्ट्रया कण्डूमपनेतुमित्यादि । तथा—

सुखसुप्तस्त्वया सिंहः पादाघातेन बोधितः ।
यदहं वादवचनाटोपेन परिकोपितः ।। ३० ।।

एवं हस्ताघातेन कृष्णाहिरुत्फणीकृतः, वाताभिमुखस्थितेन दावाग्निर्ज्वालितः, शरीरसौख्याय कपिकच्छूलतालिङ्गिता, दुर्वासा दुर्वचनैः कोपितः इत्यादि ।

कुलशास्त्रादिसम्प्रश्नो यथा—

कस्मिन् कुले तवोत्पत्तिः कुत्र शास्त्रे परिश्रमः ।
कस्मादकस्मात् प्राप्तोऽत्र सर्वमेतत्प्रकाश्यताम् ।। ३१ ।।

स्वशास्त्राध्ययनप्रथा यथा—

लक्षणे मम दक्षत्वं साहित्ये संहिता मतिः ।
तर्के कर्कशतात्पर्यं क्व शास्त्रे नास्ति मे श्रमः ।। ३२ ।।

इत्याद्यनेकोल्लेखैः सर्वच्छन्दोभिर्वादोऽभ्यसनीयः ।

इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां
काव्यकल्पलताकविशिक्षावृत्तौ छन्दःसिद्धिप्रताने
छन्दोऽभ्यासस्तबको चतुर्थः ।। ४ ।।

## अथ प्रथमप्रताने पञ्चमस्तबकः

अथ वर्ण्यानि कथ्यन्ते तानि यानि कवीश्वरैः ।
महाकाव्यप्रभृतिषु प्रबन्धेषु बबन्धिरे ॥ १ ॥

राजाऽमात्यपुरोहितौ नृपवधू राजाङ्गजः सैन्यपो
देशग्रामपुरीसरोऽब्धिसरिदुद्यानान्यरण्याश्रमाः ।
मन्त्रो दूतरणप्रयाणमृगयाश्वेभर्त्विनेन्दूदया
वीवाहो विरहः स्वयंवरसुरापुष्पाम्बुखेला रतम् ॥ २ ॥

नृपे विद्या नयः शक्तिर्बलं तस्करताक्षयः ।
प्रजाशास्तिः प्रजारागो धर्मकामार्थतुल्यता ॥ ३ ॥

प्रयाणरणखड्गादिशास्त्राण्यरिपराजयः ।
अरिनाशोऽरिशैलादिवासोऽरिपुरशून्यता ॥ ४ ॥

महःश्रीदानकीर्त्याद्या गुणौघा रूपवर्णनम् ।
मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः ॥ ५ ॥

महामात्ये नयः शास्त्रं स्थैर्यं बुद्धिर्गभीरता ।
शक्तिः शस्त्रमलोभत्वं जनरागो विवेकिता ॥ ६ ॥

मन्त्री भक्तौ महोत्साहः कृतज्ञो धार्मिकः शुचिः ।
अकर्कशः कुलीनश्च स्मृतिज्ञः सत्यभाषकः ॥ ७ ॥

विनीतः स्थूललक्षश्चाव्यसनो वृद्धसेवकः ।
अक्षुद्रः सत्त्वसम्पन्नः प्राज्ञः शूरोऽचिरक्रियः ॥ ८ ॥

राज्ञा परीक्षितः सर्वोपधासु निजदेशजः ।
राजार्थस्वार्थलोकार्थकारको निस्पृहः शमी ॥ ९ ॥

अमोघवचनः कल्पः पालिताशेषदर्शनः ।
पात्रौचित्येन सर्वत्र नियोजितपदक्रमः ॥ १० ॥

आन्वीक्षिकीत्रयीवार्तादण्डनीतिकृतश्रमः ।
क्रमागतो वणिक्पुत्रो भवेद्राज्यविवृद्धये ॥ ११ ॥

कुलकम् ।

पुरोहिते स्मृतिर्वेदा निमित्तापत्प्रतिक्रिया ।
दण्डनीतिज्ञता शुद्धधर्मशीलकुलक्रमाः ॥ ११ ॥

देव्यां विज्ञानचातुर्यं त्रपाशीलव्रतादयः ।
रूपलावण्यसौभाग्यप्रेमशृङ्गारमन्मथाः ॥ १२ ॥

वेणीधम्मिल्लसीमन्तभालश्रवणनासिका ।
कपोलाधरनेत्रभ्रूकटाक्षदशनोक्तयः ॥ १४ ॥
कण्ठबाहुकरोरोजनाभ्यो मध्यं वलित्रयम् ।
रोमालिश्रोणिजङ्घोरुगतिक्रमनखाः क्रमात् ॥ १५ ॥
कुमारे शस्त्रशास्त्रश्रीकलावलगुणोच्छ्रयाः ।
बाह्वाली खुरली[1] राजभक्तिः सुभगतादयः ॥ १६ ॥
सेनापतौ महोत्साहः स्वामिभक्तिः सुधीरभीः ।
अभ्यासो वाहने शास्त्रे शस्त्रे च विजयो रणे ॥ १७ ॥
देशे बहुखनिद्रव्यपण्यधान्याकरोद्भवाः ।
दुर्गग्रामजनाधिक्यनदीमातृकतादयः ॥ १८ ॥
ग्रामे धान्यलतावृक्षसरसीपशुपुष्टयः ।
क्षेत्रारघट्टकेदारग्रामेयीमुग्धविभ्रमाः ॥ १९ ॥
पुरेऽट्टपरिखावप्रप्रतोलीतोरणालयाः ।
प्रासादाध्वप्रपारामवापीवेश्यासतीत्वरी ॥ २० ॥
सरस्यम्भोलहर्यम्भोगजाद्यम्बुजषट्पदाः ।
हंसचक्रादयस्तीरोद्यानस्त्रीपान्थकेलयः ॥ २१ ॥
अब्धौ द्वीपाद्रिरत्नोर्मिपोतयादोजगत्प्लवाः ।
विष्णुकुल्यागमश्चन्द्राद्वृद्धिरौर्वोऽब्दपूरणम् ॥ २२ ॥
सरित्यम्बुधियायित्वं वीच्यो जलगजादयः ।
पद्मानि षट्पदा हंसचक्राद्याः कूलशाखिनः ॥ २३ ॥
उद्याने सरणिः सर्वफलपुष्पलताद्रुमाः ।
पिकालिकेकिहंसाद्याः क्रोडावाप्यध्वगस्थितिः ॥ २४ ॥
शैले मेघौषधीधातुवंशकिन्नरनिर्झराः ।
शृङ्गपादगुहारत्नवनजीवाद्युपत्यका ॥ २५ ॥
अरण्येऽहिवराहेभयूथसिंहादयो द्रुमाः ।
काकोलूककपोताद्या भिल्लमल्लदवाद्रयः ॥ २६ ॥
आश्रमेऽतिथिपूजैणविश्वासो हिंस्रशान्तता ।
यज्ञधूमो मुनिसुता द्रुसेको वल्कलद्रुमाः ॥ २७ ॥
मन्त्रे पञ्चाङ्गता शक्तिः षाड्गुण्योपायसिद्धयः ।
उदयाश्चिन्तनीयाश्च स्थैर्यौन्नत्यादिसूक्तयः ॥ २८ ॥

---

१. शस्त्रशिक्षणशाला खुरली ।

दूते स्वस्वामितेजःश्रीविक्रमौन्नत्यकृद्वचः ।
शत्रुक्षोभकरी चेष्टा धाष्टर्यं दाक्ष्यमभीरुता ॥ २६ ॥

युद्धे तु वर्मबलवीररजांसि तुर्य-
विश्वासनादशरमण्डपरक्तनद्यः ।
छिन्नातपत्ररथचामरकेतुकुम्भी
मुक्तासुरीवृतभटामरपुष्पवर्षाः ॥ ३० ॥

प्रयाणे भेरिनिस्वानभूकम्पबलधूलयः ।
करभोऽक्षध्वजच्छत्रवणिक्शकटवेसराः ॥ ३१ ॥

मृगयायां श्वसञ्चारो वागुरा नीलवेषता ।
भटढक्का मृगवासः सिंहयुद्धं त्वरागतिः ॥ ३२ ॥

अश्वे खरखुरोत्खातरजः सल्लक्षणस्थितिः ।
गतिर्वेगवती वक्रमास्यं धाराप्रपञ्चनम् ॥ ३३ ॥

गजे सहस्रयोधित्वमुच्चत्वङ्कर्णचापलम् ।
अरिव्यूहविभेदित्वङ्कुम्भमुक्तामदालिनः ॥ ३४ ॥

सुरभौ दोला कोकिलमारुतसूर्यगतितरुदलोद्भेदाः ।
जातीतरपुष्पचयाम्रमञ्जरीभ्रमरझङ्काराः ॥ ३५ ॥

ग्रीष्मे पाटलमल्लीतापसरःपथिकशोषवाताल्यः ।
सक्तु प्रपा प्रपास्त्री मृगतृष्णाम्रादिफलपाकाः ॥ ३६ ॥

वर्षासु घनशिखिस्मयहंसगमाः पङ्ककन्दलोद्भेदौ ।
जातोकदम्बकेतकझञ्झानिलनिम्नगा हलिप्रीतिः ॥ ३७ ॥

शरदीन्दुरविपटुत्वं जलाच्छताऽगस्तिहंसवृषदर्पाः ।
सप्तच्छदपद्मसिताभ्रधान्यशिखिपक्षमदपाताः ॥ ३८ ॥

हेमन्ते दिनलघुता शीतयवस्तम्बमरुवकहिमानि ।
शिशिरे शिरीषधूमाहिकुन्दाम्बुजदाहशिखिरतोत्कर्षाः ॥ ३९ ॥

सूर्येऽरुणता रविमणिचक्राम्बुजपथिकलोचनप्रीतिः ।
तारेन्दुदीपकौषधिधूकतमश्चौरकुमुदकुलरार्तिः ॥ ४० ॥

चन्द्रे कुलटाचक्राम्बुजमानविरहितमोहानिरौज्ज्वल्यम् ।
जलधिजननेत्रकैरवचकोरचन्द्राश्मदम्पतिप्रीतिः ॥ ४१ ॥

विवाहे स्नानशुभ्राङ्गभूषोलूलत्रयीरवाः ।
वेदीसोमन्ततारेक्षालाजामङ्गलवर्तनम् ॥ ४२ ॥

विरहे तापनिश्वासचिन्ता मौनं कृशाङ्गता ।
अब्जशय्या निशादैर्घ्यं जागरः शिशिरोष्मता ॥ ४३ ॥

स्वयंवरे शचीरक्षा मञ्चमण्डपसज्जता ।
राजपुत्री नृपाकारान्वयचेष्टाप्रकाशनम् ॥ ४४ ॥

सुरापाने विकलता स्खलनं वचने गतौ ।
लज्जा मानच्युतिः प्रेमाधिक्यं रक्तेक्षणभ्रमाः ॥ ४५ ॥

पुष्पावचये पुष्पावचयः पुष्पार्पणार्थने दयिते ।
मानाद्यं गोत्रस्खलनेर्ष्या वक्रोक्तिसम्भ्रमाश्लेषाः ॥ ४६ ॥

जलकेलौ सरःक्षोभश्चक्रहंसापसर्पणम् ।
पद्मग्लानिपयोविन्दुदृग्रामा भूषणच्युतिः ॥ ४७ ॥

सुरते सात्त्विका भावाः सीत्कारः कुड्मलाक्षता ।
काञ्चीकङ्कणमञ्जीररवोऽधरमखक्षते ॥ ४८ ॥

वर्णेषु वर्ण्यभावानां दिङ्मात्रमिति कीर्तितम् ।
चिद्रूपैश्चिन्त्यमानानां भवत्येषामनन्तता ॥ ४९ ॥

असतोऽपि निबन्धेनानिबन्धेन सतोऽपि च ।
नियमेन च जात्यादेः कवीनां समयस्त्रिधा ॥ ५० ॥

असतोऽपि निबन्धो यथा—

रत्नादि यत्र तत्रादौ हंसाद्यल्पजलाशये ।
जलेभाद्यं नभोनद्यामम्भोजाद्यं नदीष्वपि ॥ ५१ ॥

तिमिरस्य तथा मुष्टिग्राह्यं सूचीविभेद्यताम् ।
अञ्जलिग्राह्यता कुम्भोपवाह्यत्वेविधुत्विषः ॥ ५२ ॥

शुक्लत्वं कीर्तिहासादौ कार्ष्ण्यं दुष्कीर्त्यघादिषु ।
प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः ॥ ५३ ॥

विभावर्यां भिन्नतटाश्रयणं चक्रवाकयोः ।
ज्योत्स्नापानं चकोराणां वर्णयेदसदप्यदः ॥ ५४ ॥

चतुर्भिः कलापकम् । सतोऽप्यनिबन्धो यथा—

वसन्ते मालतीपुष्पं फलं पुष्पं च चन्दने ।
अशोके च फलं ज्योत्स्नाध्वान्ते कृष्णान्यपक्षयोः ॥ ५५ ॥

कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तताम् ।
प्रियङ्गुपुष्पे पीतत्वं सरोजमुकुलादिषु ॥ ५६ ॥
हरितत्वं दिवा नीलोत्पलानां स्मेरता दिवा ।
शेफालिकासुमे भ्रंशं वर्णयेन्न सदप्यदः ॥ ५७ ॥

त्रिभिर्विशेषकम् । नियमो यथा—

मुक्तास्ताम्रपर्ण्यमिवाब्धिष्वेव मकरानपि ।
भूर्जद्रून् हिमवत्येव मलये ह्येव चन्दनम् ॥ ५८ ॥
सामान्यग्रहणे वारिमुचां कृष्णत्वमेव हि ।
रक्तत्वमेव रत्नानां पुष्पाणां शौक्ल्यमेव च ॥ ५९ ॥
तथा वसन्त एवान्यभृतानां ध्वनितोद्भवम् ।
वर्षास्वेव मयूराणां रुतं नृत्तं च वर्णयेत् ॥ ६० ॥

त्रिभिर्विशेषकम् । नियमविशेषो यथा—

नीलकृष्णयोर्हरितकृष्णयोस्तथा श्यामकृष्णयोः ।
पीतपाटलयोः शुक्लगौरयोर्नागसर्पयोः ॥ ६१ ॥
महार्णवसागरयोः क्षीरक्षारसमुद्रयोः ।
कमलासम्पदोः कामध्वजे मकरमत्स्ययोः ॥ ६२ ॥
द्वादशानामप्यर्काणां वार्ध्यत्रिदृगग्जचन्द्रयोः ।
चन्द्रे शशैणयोर्विष्णुशेषकूर्मादिकस्य च ॥ ६३ ॥
नारायणदामोदरमाधवप्रभृतेरपि ।
दानवासुरदैत्यनामैक्यमेवाभिसम्मतम् ॥ ६४ ॥

चतुर्भिः कालापकम् ।

दानवास्तु विप्रचित्तिः शम्बरो नमुचिस्तथा ।
पुलोमादयोऽथ दैत्या हिरण्याख्यो विरोचनः ॥ ६६ ॥
बाणो हिरण्यकशिपुर्बलिप्रह्लादकादयः ।
अथासुरा वृषपर्वबलवृत्रादयः स्मृताः ॥ ६६ ॥
स्त्रीणामक्ष्णः कटाक्षाणां शुक्लता कृष्णताथवा ।
कृष्णताप्यथ वा शुक्लश्यामता शुक्लकृष्णता ॥ ६७ ॥
बहुकालजन्मनोऽपि शिवचन्द्रस्य बालता ।
मनोभवस्य मूर्त्तत्वममूर्त्तत्वं च वर्ण्यते ॥ ६८ ॥

देवदेवीस्थितिं विद्यान्नायिकानायकक्रमम् ।
स्वभावान् सर्वजीवानां व्यवस्था देशकालयोः ॥ ६९ ॥

एतच्छ्लोकोक्तभावान् वर्ण्यानां विशेषान्तराणि कविसमयोदाहरणानि मत्कृतकाव्यकल्पलतापरिमलात् ज्ञेयानि ।

स्तबकोऽयङ्गतार्थः ।

॥ इति छन्दसिद्धिप्रताने प्रथमे स्तबकः पञ्चमः ॥ ५ ॥
इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां
काव्यकल्पलताकविशिक्षावृत्तौ छन्दःसिद्धिप्रतानः प्रथमः ॥ १ ॥

## अथ द्वितीयप्रताने प्रथमः स्तबकः

॥ अथ शब्दसिद्धिप्रतानः ॥

तत्र पूर्वं रूढयौगिकमिश्रशब्दाख्यानम् । यथा—

**रूढयौगिकमिश्राख्यास्त्रिधा शब्दाः प्रकीर्तिताः ।**
**व्युत्पत्तिवर्जिता रूढाः शब्दा आखण्डलादयः ॥ १ ॥**

प्रकृतिप्रत्ययविभागेनार्थरहिता व्युत्पत्तिवर्जिताः शब्दा इत्यनुवाद्यनिर्देशः । रूढा इति विधेयपदम् । आखण्डलादय इत्युदाहरणम् ।

न ह्यत्र प्रकृतिप्रत्ययविभागेन व्युत्पत्तिरस्ति । आदिशब्दात् मण्डपादयः । यद्यपि "नाम च धातुज"मिति शाकटायनमतेन रूढा अपि व्युत्पत्तिभाजस्तथापि वर्णानुपूर्व्यनुज्ञानमात्रप्रयोजना तेषां व्युत्पत्तिर्न पुनरन्वर्थोऽर्थप्रवृत्तौ कारणमिति रूढा अव्युत्पन्ना एव ।

यौगिकान् शब्दान् व्याचष्टे ।

**योगो गुणेन क्रियया सम्बन्धेन कृतोऽन्वयः ।**

शब्दानां परस्परमर्थानुगमनमन्वयः संयोगः । गुणक्रियाकृतयोगेन यौगिकानामुदाहरणम् ।

**गुणाः स्युर्नीलपीतादिनीलकण्ठादयस्ततः ॥ २ ॥**

ततो गुणतो गुणनिबन्धनो येषां योगस्ते शब्दा नीलकण्ठाद्याः नीलः कण्ठोऽस्येति गुणप्राधान्यान्नीलकण्ठः शङ्करः । आदिशब्दाच्छितिकण्ठः कालकण्ठ इत्यादि । संख्यापि गुण एवेति वैशेषिकमते पञ्चबाणषण्मुखाष्टश्रवोदशमुखादयः । ततः कारणात्पञ्चबाणादयोऽपि गुणनिबन्धनयोगाः ।

**क्रियाः करोतिप्रमुखास्ततः स्रष्टृक्रिया मताः ।**

ततः क्रियातः क्रियानिबन्धनो योगो येषां ते स्रष्टृप्रभृतयः । सृजतीति सर्जनप्राधान्यात् स्रष्टा ब्रह्मा । एवं धातेत्यादयः ।

सम्बन्धं व्याचष्टे ।

**सम्बन्धः स्वस्वामित्वादिस्तत्राहुर्नाम तद्वताम् ॥ ३ ॥**
**स्वान्नेतृपतिभुक्पालधनमत्वर्थकादयः ।**

स्वमात्मीयं स्वामी यस्तत्र प्रभविष्णुस्तयोर्भावः स्वस्वामित्वं तदादिः सम्बन्धः। आदिशब्दाज्जन्यजनकभावादिसम्बन्धः। तत्र स्वस्वामिभावसम्बन्धे वेतृप्रमुखाः शब्दाः स्वात्परे नियोजितास्तद्वतां स्वामिनां नामाहुः। मत्वर्थक इति। मतुस्तद्धितस्तस्यार्थोऽस्त्यर्थविशिष्टप्रकृत्यर्थेन सह देवदत्तादेः सम्बन्धस्तदाधारो वा तदस्यास्त्यस्मिन्निति मतुप्प्रत्ययविधानात् मतोरर्थो यस्य मत्वर्थकस्तद्धितो मतुना समानार्थं इत्यर्थः। स च इजणिकादिः। न केवलं मत्वर्थक एव मत्वर्थाव्यभिचारात् मतुरपि। आदिशब्दात्पादयोऽपि। तत्राहुर्नामतद्वतामित्युत्तरेष्वप्यनुवर्तनीयम्। क्रमेणोदाहरणमाह—

**भूनेता भूपतिर्भूभुक् भूपालो भूधनस्तथा ॥ ४ ॥**
**भूमांश्चेति कवे रूढ्या ज्ञेयोदाहरणावली ।**

इतिशब्दः प्रकारार्थस्तेन भूपादयोऽपि। कवीनां रूढिः परम्परायाता प्रसिद्धिस्तया न तु कविरूढ्यतिक्रमेण यथा कपालीत्यादौ सत्यपि स्वस्वामिभावसम्बन्धे कपाली मत्वर्थीयान्त एव भवति। न तु कपालपालः कपालधनः कपालभुक् कपालनेता कपालपतिरित्यादि। जन्यजनकभावसम्बन्धे यथा—

**जन्याद्विधातृकरसूकृत्कर्तृस्रष्टृसृड्जनकमुख्याः ॥ ५ ॥**
**जनकाद्योनिजजनिभूसम्भवरुहसूत्यणाद्यास्तु ।**

जन्यात्कार्यात्परे विधातृप्रभृतयस्तद्वतां जनकानां कारणानां नामाहुः। यथा—

विश्वविधाता विश्वकरः विश्वसूर्विश्वकृत् विश्वकर्ता विश्वस्रष्टा विश्वसृट् विश्वजनको ब्रह्मा तस्य हि जन्यं विश्वमिति रूढिः। मुख्यशब्द आद्यर्थस्तेन विश्वकारक इत्याद्यपि। कविरूढिरित्येव। न हि यथा चित्रकृदुच्यते तथा चित्रसूरिति। तथा जनकात्परे योन्यादयः शब्दास्तद्वतां कारणवतां कार्याणां नामाहुः। यथा—

आत्मयोनिः, आत्मजः, आत्मजनिः, आत्मभूः, आत्मसम्भवः, आत्मरुहः, आत्मसूतिर्ब्रह्मा तस्य हि आत्मा कारणमिति रूढिः। वक्ष्यमाणस्याद्यशब्दस्याभिसम्बन्धादात्यजन्मादयोऽपि। अणादयस्तु भृगोरपत्यं भार्गवः। दितेरपत्यं दैत्यः। वत्सस्यापत्यं वात्स्यान इत्यादि।

अत्रापि हि भार्गवादीनां भृग्वादयो जनका इति रूढिः। कविरूढ्येत्येव। न ह्यात्मयोनिवदात्मजनक आत्मकारक इति भवेत्। धार्यधारकभावसम्बन्धे यथा—

**धार्यात् ध्वजास्त्रपाण्यङ्कमौलिभृन्मण्डनसमानाः ॥ ६ ॥**
**धरभर्तृमालिमत्वर्थशालिशेखरसदृक्षाश्च ॥**

धार्यवाचकात्परे ध्वजादयः शेखरान्ता धारकस्य नामाहुः । यथा—वृषध्वजः शूलास्त्रः पिनाकपाणिः वृषाङ्कः चन्द्रमौलिः शूलभृत् शशिमण्डनः । समानग्रहणात्मदृशार्थास्तत्सदृशार्थाः वृषकेतनः शूलायुधः वृषलक्ष्मा चन्द्रशिराः चन्द्रभूषणः चन्द्राभरणादयो गृह्यन्ते । यथा गङ्गाधरः पिनाकभर्ता पिनाकमाली । पिनाकं मालते धारयतीति कृतत्वाच्छूली पिनाकशाली शशिशेखरः । कविरूढयेत्येव । तेन सत्यपि धार्यधारकसम्बन्धे न सर्वेभ्यो धार्येभ्यो ध्वजाद्यर्थाः शब्दाः प्रयोज्याः । न हि भवति वृषध्वजवच्छूलध्वजः शूलास्त्रवत् चन्द्रास्त्रः पिनाकपाणिवदहिपाणिः । वृषाङ्कवच्चन्द्राङ्कः । चन्द्रमौलिवद्गङ्गामौलिः । शशिमण्डनवत् चन्द्रमण्डनः । गङ्गाधरवच्चन्द्रधरः । पिनाकभर्तृवच्चन्द्रभर्ता । पिनाकमालिवत्सर्पमाली । शूलिवच्छूलवान् । शूलशालिवत् चन्द्रशाली । चन्द्रशेखरवद्गङ्गाशेखर इति । भोज्यभोजकभावसम्बन्धे, यथा—

**भोज्याद्भुग्लिट् पाय्यन्धोव्रतपाशाशनप्रमुखाः ॥ ७ ॥**

भोज्यं भक्ष्यं तद्वाचिनः शब्दात्परे भुगादयः शब्दास्तद्वतां भोज्यवतां भोक्तृणां नामाहुः । यथा । अमृतभुजोऽमृतलिहोऽमृतपायिनः अमृतान्धसः अमृतव्रताः अमृतपाः अमृताशाः अमृताशना देवास्तेषां ह्यमृतं भोज्यमिति रूढिः । प्रमुखशब्दस्तत्समानार्थभोजनादिशब्दपरिग्रहाय । कविरूढयेत्येव । न हि यथाऽमृतभुजस्तथाऽमृतवल्लभा इति भवति । पतिकलत्रभावसम्बन्धे, यथा—

**पत्युः कान्ता दयिता वधूः प्रणयिनी प्रियाऽङ्गना तुल्याः ।**
**पत्न्याः प्रणयिप्रियवररमणप्राणेश्वरेशसमाः ॥ ८ ॥**

पतिर्वरयिता तद्वाचकाच्छब्दात्परे कान्तादिसदृशाः शब्दास्तद्वतीनां पतिमतीनां भार्याणां नामाहुः । यथा—शिवकान्ता शिवदयिता शिववधूः शिवप्रणयिनी शिवप्रिया शिवाङ्गना गौरी तस्या हि शिवः पतिरिति रूढिः । तुल्यग्रहणाद्रमणीवल्लभाप्रभृतयो गृह्यन्ते । कविरूढयेत्येव । न हि भवति यथा शिवकान्ता तथा शिवपरिग्रह इति । तथा पत्नीवाचकाच्छब्दात्परे प्रणयिप्रमुखाः शब्दास्तद्वतां कलत्रवतां वरयितॄणां नामाहुः । यथा—गौरीप्रणयी गौरीप्रियः गौरीवरः गौरीरमणः गौरीप्राणेश्वरः गौरीशः शिवस्तस्य हि गौरीकलत्रमिति रूढिः । समशब्दात्समानार्थाः पत्यादिशब्दा गृह्यन्ते । कवि-

रूढयेत्येव। न हि यथा गौरीवरः शिवः तथा गङ्गावर इति। सख्युः सम्बन्धे, यथा—

**सख्युः सखिप्रभृतयः—**

सखिवाचकाच्छब्दात्परे सखिसमानार्थास्तद्वतां सखिवतां नामाहुः। यथा— श्रीकण्ठस्य सखा श्रीकण्ठसखः कुबेरः। मधुसखः कामः। प्रभृतिग्रहणात्सुहृदादयो गृह्यन्ते। कविरूढयेत्येव। न हि भवति यथा श्रीकण्ठसखो धनदस्तथा धनदसखः श्रीकण्ठ इति। बाह्यवाहकसम्बन्धे, यथा—

**वाह्याद्यानासनप्रायाः।**

वाह्यवाचिनः शब्दात् परे यानादयस्तद्वतां वाह्यवतां वाहयितॄणां नामाहुः। यथा—वृषयानः वृषासनः शम्भुः। तस्य हि वृषो यानमिति रूढिः। प्रायशब्दात् वृषगामी वृषवाहन इत्यादयोऽपि। कविरूढयेत्येव। नहि भवति यथा नरवाहनः कुबेरः तथा नरगामी नरयान इत्यादि।

ज्ञातेयसम्बन्धे यथा—

**ज्ञातेः स्वसृदुहित्रात्मजाग्रजावरजसङ्काशाः॥ ९॥**

ज्ञातिः स्वजनस्तद्वाचिनः शब्दात्परे स्वस्रादयस्तद्वतां ज्ञातेयवतां ज्ञातीनां नामाहुः। स्वस्रादीनां ज्ञातिविशेषवाचित्वात् ज्ञातिविशेषादेव प्रयोगो, यथा— यमस्वसा यमुना। हिमवद्दुहिता गौरी। चन्द्रात्मजो बुधः। गदाग्रज, इन्द्रावरजश्च विष्णुः। यमादयो हि यमुनादीनां भ्रात्रादिज्ञातय इति रूढिः। सङ्काशशब्दात् सोदरादयो गृह्यन्ते। यथा—कालिन्दीसोदरो यमः। कविरूढयेत्येव। न हि भवति यथा यमुना यमस्वसा तथा शनिस्वसापि। आश्रयाश्रयिभावसम्बन्धे यथा—

**आश्रयतः सदनाख्याः सहासिशयप्रकाराश्च॥ १०॥**

आश्रयो निवासः तद्वाचिनः शब्दात् परतः सदननामानि तथा सदनादयस्तद्वतां आश्रयवतां आश्रितानां नामाहुः। यथा। द्युसदना द्युसद्मानो देवाः। दिवौकसः। दिवशब्दोऽकारान्तोप्यस्ति इति। द्युवसतयः दिवाश्रयाः द्युसदः द्युनिवासिनः द्युशया देवाः। द्यौः स्वर्गः स च तेषामाश्रय इति रूढिः। कविरूढयेत्येव। न हि भवति, यथा 'द्युसद्मानस्तथा भूमिसद्मानो मनुष्या इति। वध्यवधकभावसम्बन्धे यथा—

**वध्याद् भिद्जिद्घातिद्वेषिध्रुक्ध्वंसिशासनविपक्षाः ।**
**अप्यन्तकारिसूदनदर्पच्छिद्दमनदारिमथनाद्याः ॥ ११ ॥**

वध्यो घात्यस्तद्वाचिनः शब्दात् परे भिदादयः अन्तकादयोऽपि तद्वतां वधकानान्नामाहुः । यथा । पुरभित् पुरजित् पुरघाती पुरद्वेषी पुरध्रुक् पुरध्वंसी पुरशासनः पुरविपक्षः पुरान्तकारी पुरसूदनः पुरदर्पच्छित् पुरदमनः पुरदारी पुरमथनः शिवः तस्य हि पुरो वध्य इति रूढिः। आदिशब्दात् पुरनिहन्ता पुरकेतुः पुरहा पुरान्तकः पुरजयीति । वध्य इति वधार्हमात्रेऽपि । तेन कालियदमनः कालियारिः कालियशासनो विष्णुरित्यादयोऽपि गृह्यन्ते। कविरूढ्यैवेत्येव । तेन कालियदमनादिवत् कालियघातीति न भवति। उक्ताः स्वस्वामित्वादयः सम्बन्धभेदास्ते च यथा भिन्नद्रव्याश्रयास्तथैकद्रव्याश्रया अपि भवन्तीति दर्शयितुमाह—

**सम्बन्धोऽपि विवक्षात इति पदादेकतोऽपि संयोज्याः ।**
**औचित्याद्विबुधैः प्राग्दर्शितसम्बन्धिशब्दास्ते ॥ १२ ॥**

विवक्षानिबन्धनो हि सम्बन्धस्तत एकस्मादपि वृषादेः सम्बन्धिपदात् परे सम्बन्धान्तरनिबन्धना वाहनादयः शब्दा यथौचित्यं प्रयुज्यन्ते एतदेवाह—

**वृषस्य सति वाह्यत्वे शङ्करो वृषवाहनः ।**
**धार्यत्वे तु वृषाङ्कोऽयं स्वत्वे वृषपतिस्तु सः ॥ १३ ॥**
**धार्यत्वेंशोरंशुमाली सत्त्वे तु रविरंशुमान् ।**
**अहेर्वध्यत्वेऽहिरिपुर्भोज्यत्वे बर्हिणोऽहिभुक् ॥ १४ ॥**

वाह्यवाहकभावसम्बन्धविवक्षायां यथा वृषवाहनो रुद्र इति भवति तथा धार्यधारकभावसम्बन्धविवक्षायां वृषलाञ्छनः स्वस्वामिभावसम्बन्धविवक्षायां वृषपतिरित्यपि । तथा धार्यधारकभावसम्बन्धविवक्षायां यथा अंशुमाली रविरिति भवति । तथा स्वस्वामिभावसम्बन्धविवक्षायां अंशुपतिः अंशुमानित्यपि । तथा बध्यबधकभावसम्बन्धे यथा अहिरिपुर्मयूरस्तथा भोज्यभोजकभावसम्बन्धे अहिभुगित्यपि भवति । सम्बन्धनिबन्धनां व्युत्पत्तिमुक्ता । व्युत्पत्त्यन्तरमाह—

**व्यक्तचिह्नाङ्कितो जातिशब्दोऽपि व्यक्तिवाचकः ।**
**यथाऽगस्तिनिवासा दिक् दक्षिणाशा प्रकीर्त्यते ॥ १५ ॥**

व्यक्तं नि:सन्देहं यच्चिह्नं विशेषणं तेन चिह्नितो जात्यभिप्रायकोऽपि शब्दो व्यक्तेर्वाचको भवति । व्यक्तेर्नामतां यातीत्यर्थः । यथाऽगस्तेर्मुनिविशेषस्य निवासो यस्यां सा इति व्यक्तं निस्सन्देहं चिह्नं तेन चिह्निता दिगिति । जातिशब्दो दक्षिणाशाया व्यक्तेरभिधायी भवति । एवं सप्तर्षिपूता दिगुत्तराशा अत्रेर्नयनसमुत्थं ज्योतिश्चन्द्र इत्यादयोऽपि । व्युत्पत्त्यन्तरमाह—

**शब्दौ त्रिपञ्चसप्तादिवाचकौ विषमायुजौ ।**
**योजयेत् त्रिनेत्रपञ्चशरसप्तच्छदादिषु ॥ १६ ॥**

त्रिपञ्चसप्तादिस्थाने विषमे अयुक्शब्दौ त्रिनेत्रादिपदेषु योजनीयौ। यथा । त्रिनेत्रो विषमनेत्रोऽयुग्नेत्रश्च शम्भुः । पञ्चशरो विषमशरोऽयुक्शरश्च काम । सप्तच्छदो विषमच्छदोऽयुक्च्छदश्च सप्तपर्णः । व्युत्पत्त्यन्तरमाह—

**इतरान्तो नञ्पूर्वो गुणशब्दोऽर्थं विरोधिनं वक्ति ।**
**यद्वत् सितेतरोऽसित एवं प्रतिपद्यते कृष्णः ॥ १७ ॥**

गुणवाची शब्द इतरशब्दान्तो नञ्पूर्वश्च विरोधिनमर्थमभिधत्ते । यथा सितेतरोऽसितश्च कृष्श एवं कृशेतरोऽकृशश्च स्थूल इत्यादि । व्युत्पत्त्यन्तरमाह—

**जलदादिषु पूर्वपदे सरोजमुख्येषु चोत्तरपदेषु ।**
**सुरपतिसमेषु चोभयपदेषु पर्यायपरिवृत्तिः ॥ १८ ॥**

जलदादिषु शब्देषु पूर्वस्मिन्नेव पदे पर्यायपरिवर्तनम् । यथा जलदस्तोयदो नीरदः । आदिग्रहणात् जलधिस्तोयधिर्नीरधिरित्यादि । सरोजमुख्येषु शब्देषु उत्तरस्मिन्नेव पदे पर्य्यायपरिवर्तनं यथा सरोजं सरोरुहं मुख्यशब्दाद्वडवाग्नि-र्वडवानलो वडबावह्निरित्यादि । सुरपतिसदृशेषु पूर्वोत्तरपदेषु पर्यायपरिवर्तनम्, यथा—सुरपतिः देवराजः त्रिदशेश्वरः समशब्दाद्भूपतिर्महीपतिः भूभुक् महीभुगित्यादि ।

**इति परिवृत्तिसहा ये योगास्ते यौगिकाः शब्दाः ।**
**परिवृत्त्यसहा ये ते मिश्रा गीर्वाणतुल्यास्तु ॥ १९ ॥**

इत्येवं पूर्वोत्तरत्रोभयत्र च पदे परिवृत्तिः पर्यायपरिवर्तनं सहन्ते क्षमन्ते परिवृत्तिसहा ये ते जलदादयो योगादन्वयाद्भवेयुरिति यौगिकाः। गीर्वाणादयः शब्दाः पुनः पूर्वोत्तरत्रोभयत्र पदे पर्यायपरिवृत्तिमसहमाना मिश्राः। कोऽभावः योगयुक्ताः रूढिमन्तश्च। तुल्यग्रहणात्कृतान्तदशरथप्रभृतयः।

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां काव्यकल्पलतावृत्तौ शब्दसिद्धिप्रताने द्वितीये रूढयौगिकमिश्राख्यः प्रथमः स्तबकः॥ १ ॥

●

## अथ द्वितीयप्रताने द्वितीयः स्तबकः

॥ अथ योगार्हनामानि ॥

भवन्ति योगिकाः शब्दाः समासव्याससहेतवः।
तद्योगार्हाणि नामानि कत्यपि प्रतिपादये॥ १॥

उद्देशवचनं पूर्वं सप्तम्यन्तमिहोदितम्।
पञ्चम्यन्तं पूर्वपदं प्रथमान्तं पुरः पदम्॥ २॥

शब्दः स एक एवात्र स्यादेकवचनात्कृतात्।
बहवो बहुवचनान्मुख्याद्यादेस्तदर्थकाः॥ ३॥

स्वर्गे सुरेभ्यो गेहानि देवे द्युभ्यः सदादयः।
स्वाहास्वधाभ्याञ्च सुधा क्रतुभ्योऽपि भुगादयः॥ ४॥

दैत्येभ्योऽरयोऽर्के सहस्रात् स्वरप्रभृतेरपि।
उष्णेभ्यश्चांशवश्चक्राश्च दिनेभ्योऽपि बान्धवः॥ ५॥

ध्वान्तेभ्यो रिपवो गोद्युपद्मिनीभ्यो ग्रहादिना।
प्रभाविभाभासोदिवादिनार्हदिवसात्करः॥ ६॥

नभोदिनेभ्यो रत्नानि गगनेभ्योऽध्वजाऽध्वगाः।
सप्तादेरश्वाऽरुणोऽर्केभ्यः सारथयस्तथा॥ ७॥

विनतायाः सूनवस्तु गरुडेभ्योऽग्रजाः पुनः ।
जैवातृके तु कुमुदात्कैरवादपि बान्धवः ॥ ८ ॥
शशात्कलाया श्छायाया मृगेभ्योऽपि भृदादयः ।
तारानिशाकुमुदिनीकौमुदीभ्यो द्विजाननाः ॥ ९ ॥
ओषध्यादक्षजायाश्च रोहिण्याश्च प्रियादयः ।
सुधाश्वेतहिमेभ्यो भा निशाभ्यो मणयः करः ॥ १० ॥
इन्द्रे सहस्रनेत्राणि शतात्तु क्रतवोऽपि च ।
वज्रेभ्यः पाणिप्रमुखाः केशवेभ्योऽग्रजाः पुनः ॥ ११ ॥
त्रिदिवेभ्यः स्वः पुरीभ्यः सुधर्मायाः सुरादिनः ।
पौलोमीभ्यः पूर्वदिग्भ्योऽप्सरोभ्यः पतिसन्निभाः ॥ १२ ॥
जम्भात्पाकाद्बलात् वृत्रात्पुलोम्नो नमुचेरपि ।
अद्रिभ्यः शासनसमा जयन्ताज्जनकादयः ॥ १३ ॥
वह्नौ धूमात् ध्वजाहव्यहविर्हुताद्भुगादयः ।
ज्वालाभ्यः सप्तादेर्मन्त्रजिह्वासप्तादितोऽर्चिषः ॥ १४ ॥
स्वाहाया वल्लभा और्वे वडबायाश्च वह्नयः ।
यमे दण्डादस्त्रमुखा महिषेभ्यो ध्वजादयः ॥ १५ ॥
कालिन्दीभ्यः सोदरास्तु धूमोर्णायाः प्रियादयः ।
दक्षिणाशाभ्यः प्रेतेभ्यः पितुश्च पतयो मताः ॥ १६ ॥
सूर्येभ्योऽङ्गजा रक्षसि रजनीभ्यश्चरः पुनः ।
निकषायाः सुताः क्रव्यादेर्भुजो वरुणे पुनः ॥ १७ ॥
यादो जलेभ्यः पतयः पाशादस्त्रादयस्तथा ।
वायौ नित्येभ्यो गतिः स्यादाशुशब्दाच्च गोगतिः ॥ १८ ॥
श्रीदे शर्वेभ्यः सख्यादिस्तत्पुत्राज्जनकादयः ।
निधानयक्षकिन्नरधनेभ्यः स्वामिसन्निभाः ॥ १९ ॥
अलकायाश्चैत्ररथात्पुष्पकात्पतयः पुनः ।
शिवे त्र्यैकभालेभ्यो दृशो वृषाद्वृषभात् ध्वजाः ॥ २० ॥
दिग्भ्यो वासांसि श्यामेभ्यः कण्ठात् कालात्पुराद्गजात् ।
पूषान्धकाभ्यां कामेभ्यो मखेभ्यः प्रतिपन्थिनः ॥ २१ ॥
पशोर्गणेभ्यो भूताच्च गौरीभ्यः पतिसन्निभाः ।
शूलात् खट्वाङ्गाद् गङ्गाया भुजगेन्दुमुखादपि ॥ २२ ॥

पिनाकाच्च कपालाच्च कपर्दाच्च भृदादयः ।
गौर्या महिषेभ्यः शुम्भात् निशुम्भान्मथनीमुखाः ॥ २३ ॥
भवेभ्यः प्रिया मेनाया हिमाद्यद्रिमुखात्सुताः ।
हेरम्बगणविघ्नाभ्यामीशाश्चैकपुरोरदाः ॥ २४ ॥
मूषकेभ्यो वाहनानि गजेभ्यो वदनानि च ।
स्कन्दे शिखिभ्यो ध्वजाद्याः शक्तेश्च पाणिसन्निभाः ॥ २५ ॥
शरादग्निभ्यो भूमुख्याः क्रौञ्चाद्रेस्तारकाद् द्विषः ।
गङ्गोमाभ्यः कृत्तिकाभ्यः सुताः षट्तो मुखानि च ॥ २६ ॥
ब्रह्मण्यात्मजः पद्मेभ्यो नाभेर्भूप्रमुखास्तथा ।
सरोजेभ्योऽप्यासनानि हंसेभ्यो वाहनानि च ॥ २७ ॥
ब्राह्म्यां ब्रह्मभ्यो नन्दिन्यो वचनेभ्योऽधिदेवताः ।
विष्णौ श्रीभ्यः पतिसमा वार्द्धिभ्यः शयनादयः ॥ २८ ॥
इन्द्रेभ्योऽवरजा वैनतेयेभ्यो वाहनानि च ।
दैत्येभ्योऽरयः पुराणात् यज्ञेभ्यः पुरुषात्पुनः ॥ २९ ॥
शार्ङ्गात् चक्रगदाशङ्खादेः श्रीवत्सात् भृतस्तथा ।
तार्क्ष्येभ्यो ध्वजा देवक्याः पुत्राश्चतुःपुरोभुजाः ॥ ३० ॥
गोपेभ्यः प्रभुसङ्काशाः पीतेभ्यो वसनानि च ।
कालियात् कालनेमेश्च चाणुराद्वै धेनुकान् मधोः ॥ ३१ ॥
पूतनायाः शाल्वात् कंसकेशिभ्यां यमलार्जुनात् ।
शिशुपालहयग्रीवराहुभ्यः कैटभान्मुरात् ॥ ३२ ॥
शकटेभ्यो बलिभ्यश्च द्विविदान्नरकादपि ।
हिरण्यकशिपोर्मेदबाणारिष्टाग्रतोऽरयः ॥ ३३ ॥
रुक्मिण्याः सत्यभामाया राधायाश्च प्रियादयः ।
रामे मुसलात् सीरेभ्योऽस्त्राणि तालाग्रतो ध्वजाः ॥ ३४ ॥
रोहिण्याः पुत्रा रेवत्याः प्रियाः कृष्णादितोऽग्रजाः ।
तथा रुक्मिप्रलम्बाभ्यां यमुनाभ्यो भिदादयः ॥ ३५ ॥
नीलेभ्यो वसनप्राया लक्ष्म्यां कृष्णादितः प्रियाः ।
पद्मेभ्यो वासाद्याः क्षीराब्धिभ्योऽपि पुत्रिकाः ॥ ३६ ॥

कामे विषमादस्त्राणि श्रीभ्यः पुत्रा रतिप्रिया:।
मधुभ्यः सुहृदो मीनमकरेभ्यो ध्वजादयः ॥ ३७ ॥
अनिरुद्धात्पितृमुखाः शम्बरात् सूर्यकाद्भिदः।
पञ्चादितः शरप्राया पुष्पेभ्यः केतनानि च ॥ ३८ ॥
मृणालाद्धनूंषि पुष्पेभ्यो बाणास्त्रधनूंषि च।
शृङ्गाराभ्यां सङ्कल्पाच्चित्तेभ्यो योनिसन्निभाः ॥ ३९ ॥
तार्क्ष्येऽरुणेभ्योऽवरजा विष्णुभ्यो वाहनानि च।
विनतायाः सुपर्णाश्च कश्यपाच्च तनूद्भवाः ॥ ४० ॥
सर्पेभ्योऽरयः पक्षिभ्यो नाथा वज्रिमुखाज्जितः।
दैत्ये दितेर्दनोः पुत्रा देवेभ्यो रिपवस्तथा ॥ ४१ ॥
पृथिव्यामब्धिभ्यो नेमीमेखलावसनानि च।
शैले भूभ्यो धराध्रोप्युदयाद्रावुदयात्तथा ॥ ४२ ॥
पूर्वदिग्गिरयोऽस्ताद्रावस्तात्प्रत्यङ्मुखान्नगाः।
हिमाद्रावुदग्रहिमेभ्योऽद्रिपोऽद्रिभ्योऽधिपास्तथा ॥ ४३ ॥
मेनकायाः प्रियसमाः पार्वतीभ्यो गुरुः पुनः।
मलये दक्षिणाच्छैलाः कैलासे स्फटिकान्नगाः ॥ ४४ ॥
मेरौ स्वर्गिभ्यः स्वर्गेभ्यः सुवर्णेभ्योऽपि भूधराः।
सूर्येभ्यः कान्ते सूर्येभ्योऽग्निभ्यो रत्नोपलादयः ॥ ४५ ॥
चन्द्रेभ्यः कान्ते चन्द्रेभ्यो मणयो दृषदोऽपि च।
अब्धौ नदीभ्यो वारिभ्यः स्रोतसो यादसोऽधिपाः ॥ ४६ ॥
अद्भ्यो निध्याशयौ राशिधिर्दुग्धादेः परेऽर्णवाः।
गङ्गायां सिद्धात् स्वःस्वर्गिनभोभ्यो निम्नगाः समाः ॥ ४७ ॥
जह्नोः पुत्र्यः कालिन्द्यां कलिन्दादर्कादितः सुताः।
कृतान्तेभ्यो भगिन्योऽपि रेवायां मेकलात्तथा ॥ ४८ ॥
चन्द्रेभ्यस्तनयास्ताप्यां तपनेभ्यस्तनूद्भवाः।
अब्जे जलेभ्यः सरसः पङ्काज्जन्मजरुड्रुहाः ॥ ४९ ॥
भृङ्गे पुष्पेभ्यो मध्वादेर्लिहः षट्शब्दतोङ्घ्रयः।
सर्पे वातेभ्योऽशनाद्या द्विशब्दाद्रसनासमाः ॥ ५० ॥

दृग्भ्यः श्रुतयो विषेभ्यः फणेभ्योऽपि धरादयः ।
मयूरे नीलेभ्यः कण्ठा भुजङ्गेभ्यो भुगादयः ॥ ५१ ॥

जलदेभ्यः सुहृत्तुल्या वृक्षे क्ष्माभ्यो जरुद्रुहाः ।
जलवाहे जलेभ्यस्तु वाहो मुग्दो धरादय ॥ ५२ ॥

एवं परावृत्तिसहान् शब्दानौचित्यतो बुधः ।
समासव्याससिद्ध्यर्थं परावृत्य प्रयोजयेत् ॥ ५३ ॥

स्तबकोऽयं निगदसिद्धः ।

इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां
काव्यकल्पलतावृत्तौ शब्दसिद्धिप्रताने द्वितीये
यौगिकनाममालास्तबको द्वितीयः ॥ २ ॥



## अथ द्वितीयप्रताने तृतीयः स्तबकः

अथाऽनुप्रासोपायमाह—

अनुप्रासस्य सिद्ध्यर्थं शब्दान् साधारणान् ब्रुवे ।
मण्डितं मण्डलैः पुरैः पूरितं सङ्कुलं कुलैः ॥ १ ॥

राजितं राजिभिर्युक्तं पङ्क्तिभिः पटलैः पटुः ।
निचितं निचयैरोधैर्मोघं सञ्चयसञ्चितम् ॥ २ ॥

पुञ्जेन मञ्जुजातेन सुजातं वृन्दसुन्दरम् ।
कदम्बचुम्बितं सार्धं कृतार्थं सगुणं गणैः ॥ ३ ॥

राशिभिर्भासितं व्रातैः क्रान्तं संहतिसंहतम् ।
सोमं स्तौमि ससङ्घट्टं सङ्घैः प्रीतप्रजं व्रजैः ॥ ४ ॥

स्फुरन्मदं समुदयैः प्रकरेण प्रियङ्करम् ।
ततमानं वितानेन निकुरम्बसडम्बरम् ॥ ५ ॥

निकरेण प्रीतिकरं निवहप्रवहत्प्रभम् ।
निकायेन सुकायश्रीविसरप्रसरद्रसम् ॥ ६ ॥
यूथेन ग्रथितं जालजटालं पूगसङ्गतम् ।
सन्दोहसप्ररोहश्रि समुदायमदाश्रितम् ॥ ७ ॥
समूहसुमहद्व्यूहमहितं वारधारकम् ।
समाजराजितं चक्राऽश्चितमुत्करमुत्करैः ॥ ८ ॥
चक्रवालविशालश्रीसङ्घातघटितोदयम् ।
घोरणीधारणं श्रेणीशरणं कलमालिभिः ॥ ९ ॥
ततिभिर्विततं मालामालितावलिशालितम् ।
विशालशालितं कीर्णंविस्तीर्णं भूरि पूरितम् ॥ १० ॥
प्रभूतभूतं प्रचुरप्रचारं कलपुष्कलम् ।
भूयिष्ठपुष्टमुद्भ्रान्तादभ्रं बहुलतावहम् ॥ ११ ॥
प्रारुप्रचारहारिस्फारितरुचिररुचिबन्धुराबन्धाः ।
शोभनशोभं सुषमसममधुरधुरोत्तमतमाग्रिमग्राह्याः ॥ १२ ॥
अर्हंप्रबर्हंसुन्दरतरसत्तमतमनवप्रवराः ।
पुण्यवरेण्यग्रामग्रामण्यौ काममभिरामः ॥ १३ ॥
बलाद्वल्गुमनोहरतरसम्यग्रम्यमञ्जुरुचिपुञ्जाः ।
दृष्टप्रकृष्टकामं वामाग्र्याग्राः सुखप्रमुखाः ॥ १४ ॥
मञ्जुलोज्ज्वलसोद्रेकप्रवेकानुत्तमक्रमाः ।
निवेशपेशलप्राग्रजाग्रत्प्राग्रहराग्रहाः ॥ १५ ॥
नम्रकम्रं काम्यकामवर्यंधुर्यप्रियक्रियाः ।
साधुशुद्धं कान्ततान्तस्पष्टपृष्टवराऽन्तराः ॥ १६ ॥
मुख्यसंख्यरुच्यरुचिसम्यक्सौम्यस्फुरत्पराः ।
हृद्यविद्योतिसौभाग्यभाग्यमाधुर्यधुर्यकाः ॥ १७ ॥
प्रधानसन्धानज्येष्ठश्रेष्ठौ मनोरमः क्रमः ।
परार्घ्यंपरर्द्धिजात्यजातोऽनुत्तरसन्तरत् ॥ १८ ॥
सरलाग्रेसरोवर्गाग्रणीरन्योन्यधन्यभाः ।
अकनीयः कमनीयः पुरोगतपुरोगकाः ॥ १९ ॥

अथ श्वेतादिवर्णाः—

धवलप्रबलो लक्ष्यवलक्षौ गौरगौरवः ।
सितस्मितशुभादभ्रकेतकश्वेतकान्तयः ॥ २० ॥

पलाण्डुपाण्डुरहरहरिणौ गर्जदर्जुनः ।
दन्तावदाती बिसविशदः शुक्लांशुशुक्लताः ॥ २१ ॥

अथ रक्तवर्णाः—

अरुणारुणदृक्कोणशोणपाटलपाटलाः ।
पक्वाम्रताम्रमाञ्जिष्ठवरिष्ठौ रोहिरोहितः ॥ २२ ॥
उद्रिक्तरक्तलोहितलौहितादभ्रबभ्रवः ।
कडारस्फारहारिद्रहारिरुक्भद्रकद्रवः ॥ २३ ॥

बभ्रुबभ्रवङ्गपिङ्गौ भृशं पिशङ्गमङ्गकम् ।
कृष्णकृष्णतालकालमेचकिकण्ठमेचकाः ॥ २४ ॥
कपिकपिशकपिलहरिहरितपिञ्जरपुञ्जपिङ्गलकलभाः ।
उन्मीलन्नोलश्रीः परितो हरितो निकामतः श्यामाः ॥ २५ ॥

श्यामाः श्यामलमसिवद्रसितः शितिरुक्स्थितिः ।
सारङ्गरङ्गदङ्गश्रीः शबलप्रबलप्रभः ॥ २६ ॥

प्रसरद्धूसरोधूम्रधूमलो धूमकम्ररुक् ।
पुरः कर्बुरकिर्मीरकिरणः कलचित्रलः ॥ २७ ॥

कपोतकान्तिकल्माषमयूखौ चित्रचित्ररुक् ।
निर्वर्ण्याभ्यर्णसन्नद्धासन्नसन्निधिसन्धयः ॥ २८ ॥

सदेशपेशलश्रीमत् ससोमविकटान्तिकाः ।
सन्निधानगुणाधानसन्निकर्षप्रकर्षता ॥ २९ ॥

अभ्यग्रमभ्यग्रहणमुपकण्ठविकुण्ठता ।
अभ्यासमभ्यासमता निकटप्रकटस्थितिः ॥ ३० ॥

उपान्तकान्तसम्भ्रान्तपरिक्रीडत्सनीडता ।
सवेशसन्निवेशश्रीः सविधो विविधोदयः ॥ ३१ ॥
शश्वत् पार्श्वे सन्निकृष्टसमीपदीपताः ।
समर्यादस्वमर्यादौ हिताव्यवहिताशयः ॥ ३२ ॥

अपदान्तरनान्तश्रीरनन्तरपरस्परः ।
संसक्तव्यक्तो नेदिष्ठदिष्टोऽथ दूरपूरतः ॥ ३३ ॥
विप्रकृष्टः प्रकृष्टश्च दवीयः पदवी तथा ।
दविष्ठविनिविष्टोऽथ धर्मकर्मणि शर्मभाक् ॥ ३४ ॥
सतत्त्वसत्त्वसहजसहचारीति नीतिमान् ।
रूपस्वरूपस्वभावभावसंसिद्धिसिद्धयः ॥ ३५ ॥
निसर्गसर्गप्रकृतिकृतिनो लक्षणक्षणाः ।
शीलानश्लीलशीलोऽथ स्वस्थावस्थादशावशात् ॥ ३६ ॥
रतिस्थितिरथो स्नेहासन्देहप्रीतिरीतितः ।
प्रेमस्थेमातिदाक्षिण्यदाक्षाऽनुकूलमूलतः ॥ ३७ ॥
सम्भ्रमभ्रमसम्पर्कात् तर्कनिःशङ्कसङ्कराः ।
अवधाननिधानश्रीः समाधानविधानतः ॥ ३८ ॥
प्रणिधानसुधाधानसमाधिर्व्याधिबाधिनी ।
धर्मशर्मकरः पुण्यनैपुण्यो वृषनिस्तृषः ॥ ३९ ॥
श्रेयः प्रेयो भागधेयः सन्धेयः सुकृतं कृतम् ।
नूतनाकूतसामन्तमतता भावभावना ॥ ४० ॥
स्वयमाशयातिशयादथ विस्तारतारता ।
प्रपञ्चसञ्चनाव्यासविन्यासाभोगभोगता ॥ ४१ ॥
नवच्छायोच्छ्रयारोहरोहच्चयसमुच्छ्रयाः ।
अथोदग्रसमग्रत्वमुच्छ्रितस्थितसंश्रितः ॥ ४२ ॥
रङ्गत्तुङ्गच्चङ्गदुच्चनुन्नीन्नतधुरोद्धुराः ।
समस्तन्यस्तसकलसकलोद्गर्वसर्वता ॥ ४३ ॥
नूनमन्यूननिखिलविलसद्विश्वविश्वता ।
अखण्डमण्डनाव्यग्रसमग्राशेषशेखराः ॥ ४४ ॥
अखिलानाविलः शुद्धमुद्धतं रुचिरं शुचिः ।
पवित्रचित्रताभावपावनः पूतनूतनः ॥ ४५ ॥
ज्वलदुज्ज्वलविमलोत्तमौ मिलदनाविलः ।
नवीनपीनसद्यस्कहृद्यतानूतनूतना ॥ ४६ ॥
प्रत्यग्राव्यग्रताभव्यनव्यत्वाभिनवस्तथा ।
निकामरामातिमात्रगात्रतैकान्तकान्तता ॥ ४७ ॥

|627|

एवं सामान्यशब्दानां ज्ञेयाऽनुप्रासवासना ।
अथो कथादिके राजवर्णनाद्युपयोगिनः ॥ ४८ ॥

अनुप्रासस्य सिद्ध्यर्थं शब्दान् कतिपयान् ब्रुवे ।
महादेव महाशर्व गर्वाहर मनोहर ॥ ४९ ॥

उग्रोऽग्रो गिरि गिरिशो वर्गो भर्गोत्तमक्रमः ।
धराधीशानिशानश्रीर्भवप्रवरवैभवः ॥ ५० ॥

विना पिनाकिना चेतो वह्निरेताः शिवः शिवः ।
शम्भुर्निशुम्भनो रुद्ररौद्रो निःशङ्कशङ्करः ॥ ५१ ॥

मर्द्दी कपर्दी भूपालिकपालीभीमभीमभा ।
स्थाणुः स्थाणुर्वामदेव वामो भैरवभैरवः ॥ ५२ ॥

खण्डपरशुरखण्डश्रीर्निस्तन्द्रश्चन्द्रमौलिवत् ।
जितारातिः पुरारातिः सव्योमकेशपेशलः ॥ ५३ ॥

नीलकण्ठसदृङ्नीलो नीललोहितलीलया ।
विरूपाक्षः सरूपाक्षः कृत्तिवासाः प्रकाशभाः ॥ ५४ ॥

वृषा वृषाङ्कसर्वाङ्गखट्वाङ्गधरदुर्धराः ।
श्रीकण्ठोत्कण्ठया कण्ठे कण्ठेकालकरालरुक् ॥ ५५ ॥

ईश्वरोऽनश्वरः स्फूर्जद्धूर्जटिर्मूलशूलभृत् ।
मृत्युं मृत्युञ्जयस्फूर्तिरष्टमूर्तिस्मूर्तिमान् ॥ ५६ ॥

भूतप्रभुः प्रभूतश्रीर्विष्टपः शिपिविष्टवत् ।
गौरीगौरीशकालोशशाली चण्डीशचण्डिमा ॥ ५७ ॥

दुर्गा दुर्गाणि रुद्राणी वाणी शर्वाणिपाणिना ।
बाल्या कात्यायिनी सर्वमङ्गला सर्वमङ्गला ॥ ५८ ॥

नवानीता भवानी साऽपर्णा वर्णा शिवाऽशिवा ।
रणे गणेशविघ्नेशनिघ्ने हेरम्बडम्बराः ॥ ५९ ॥

परः परशुपाणिश्रीः सनायकविनायकः ।
स्तम्बो लम्बोदरो दन्तैकदन्तेभास्यलास्यवत् ॥ ६० ॥

दूषको मूषकरथो महासेनमहा महान् ।
स्वामी कामी कृतास्कन्दः स्कन्दषण्मुखसम्मुखाः ॥ ६१ ॥

महावेजो महातेजा दत्तार्तिः कार्तिकेयवत् ।
कुमारसारसेनानीः सेना गाङ्गेयगेयता ॥ ६२ ॥

सब्रह्मचारी सब्रह्म यमाहुर्बाहुलेयवत् ।
शाखा विशाखा क्रौञ्चारिसञ्चारि शरभूशराः ।। ६३ ।।
तारका तारकारातिर्नादिद्वादशलोचनः ।
विश्वरूपस्वरूपश्रीः क्रतुपुरुषपौरुषः ।। ६४ ।।
दामोदरवदुद्दामो धरणीधरदुर्धरः ।
श्रीवत्सवदतुच्छश्रीः सत्रिविक्रमविक्रमः ।। ६५ ।।
सेवासु वासुदेवाभः सहृषीकेशपेशलः ।
विष्वक्सेन विष्वक्सेनच्छद्मना पद्मनाभवत् ।। ६६ ।।
विष्णुर्वत्तिष्णुवैकुण्ठकुण्ठलोकेशकेशवाः ।
द्विट् मुण्डपुण्डरीकाक्षो भारान्नारायणप्रभुः ।। ६७ ।।
स्फीतां पीताम्बरो मञ्जुर्मञ्जुकेशाच्युताच्युताः ।
श्रीवत्साङ्कशशाङ्कश्रीर्जनार्दन इवार्दनः ।। ६८ ।
सदा गदाधरः शाली वनमाली हरिर्हरिः ।
आशादाशार्हवद्बाणः पुराणपुरुषक्रमः ।। ६९ ।।
इन्द्रोपेन्द्रकृष्णकृष्णपुरुषोत्तमपौरुषाः ।
वृषा वृषाकपिः सेतुस्तार्क्ष्यकेतुरजोग्रजः ।। ७० ।।
नयज्ञयज्ञपुरुषविक्रमोपमविक्रमः ।
विष्टरश्रवसाविष्टो विश्वं विश्वम्भरः प्रभुः ।। ७१ ।।
मनाक्सनातनः शौरिर्गौरिर्गोविन्दविन्दतिः ।
द्वीपश्रीपतिदैत्यारिशैत्या कुन्दमुकुन्दवत् ।। ७२ ।।
आगधमाधवः पद्मे पद्मेशयवदाशयः ।
बलदेवबलो देवः सीरभृद्वीरविक्रमः ।। ७३ ।।
कालिन्दीकर्षणोत्कर्षसोद्रेकस्त्वेककुण्डलः ।
लोलां नीलाम्बरो भद्रबलभद्रो हली बली ।। ७४ ।।
कुशली मुशली तालध्वजोत्तालो बलाद्बलः ।
ततो लम्बः प्रलम्बघ्नः क्ष्मापालः कामपालवत् ।। ७५ ।।
अनन्तानन्तसङ्ग्रामो रामकामः सरामवत् ।
सङ्कल्पजन्मकल्पश्रीर्विषमा विषमायुधः ।। ७६ ।।

चञ्चत्पञ्चशरः पुष्पपुष्पास्त्रो घस्मरः स्मरः ।
प्रद्युम्नद्युम्नकन्दर्पकन्दसद्दर्पदर्पकाः ॥ ७७ ॥

मनो मनोभवो भव्यवदनो मदनोपमः ।
पीनमीनध्वजः कामकामना मारसारता ॥ ७८ ॥

शृङ्गारयोनिः शृङ्गारस्तम्बशम्बरसूदनः ।
अनङ्गवङ्गसङ्गत्या मधुमित्रपवित्रभाः ॥ ७९ ॥

अथ मन्मथवद्दूनप्रसूनशरभासुरः ।
प्रजा प्रजापतिर्द्धर्ता जगत्कर्ता विधिर्विधिः ॥ ८० ॥

ब्रह्म सब्रह्मचारित्वं पितामहमहा महान् ।
स्रष्टा स्पष्टास्फुरन्मेधा वेधाः कमलभूरभूत् ॥ ८१ ॥

स्वयम्भूमिः स्वयम्भूवद्धाता त्राता जगत्त्रयीम् ।
चतुरा चतुरास्यश्रीः पद्मभूः सद्मसम्पदाम् ॥ ८२ ॥

परमेष्टः परमेष्ठी वेदगर्भसगर्भभाः ।
शतानन्दकृतानन्द द्रोहिणो द्रुहिणाकृतिः ॥ ८३ ॥

सुरज्येष्ठः सतां ज्येष्ठो नाभिभूर्नाभिभूतये ।
श्रीमानिन्द्र इवोन्निद्रः कश्चिददुश्चवनोपमः ॥ ८४ ॥

महामहाः सहस्राक्षः समन्युः शतमन्युवत् ।
वर्यः पर्यञ्जवत्पूर्वः पूर्वदिक्क्रान्तकान्तभाः ॥ ८५ ॥

सुनासीर सुनासीरः साक्षादिव दिवस्पतिः ।
शक्रवक्रपुरुहूतपूतः सुत्रामधामभाक् ॥ ८६ ॥

नास्तो वास्तोष्पतिः क्षोणीखण्डमाखण्डलप्रभः ।
अनघो मघवा भूपः सपुरन्दरसुन्दरः ॥ ८७ ॥

वासवासवसारौजा बिडौजा दम्भजम्भजित् ।
ससङ्क्रन्दनसङ्क्रन्दपाकशासनशासनः ॥ ८८ ॥

प्राचीनबर्हिः प्राचीनवर्गः स्वर्गपतिप्रभः ।
आदित्यनित्यसविता कविता क्रूरशूरवत् ॥ ८९ ॥

अंशुमाली महःशाली दिवाकर इवाकरः ।
द्वादशात्मा महात्माऽसौ त्रयीतनुमनुव्रजन् ॥ ९० ॥

जगच्चक्षुः सदक्षश्रीरहर्पतिमहस्ततिः ।
धर्मकर्मकर्मसाक्षीः पवित्रश्चित्रभानुवत् ॥ ९१ ॥

अर्यमा वर्यमाहात्म्यसन्तप्तः सप्तसप्तिवत् ।
आर्त्तं मार्त्तण्डचण्डश्रीर्मणिर्दिनमणिद्युतिः ॥ ९२ ॥

द्योतनः प्रद्योतनवत् सहस्रांशुमहः सहः ।
भास्वद्भास्वद्भानुभानुः शौर्यसूर्यरविच्छविः ॥ ९३ ॥

पतङ्गचङ्गतरणितरस्वस्तिगभस्तयः ।
विरोचनरोचनश्रीः पूषा भूषार्ककर्कशाः ॥ ९४ ॥

नभो नभोमणिः प्रांशुः खरांशुः कोपगोपतिः ।
दण्डदण्डधरो ध्वान्तकृतान्तसमविक्रमः ॥ ९५ ॥

करालकालसद्धर्मो धर्मराजोऽन्तकान्तकृत् ।
हीना पीनाशकीनाशवर्तिना समवर्तिना ॥ ९६ ॥

सुश्राद्धश्रद्धदेवेन शमनो दमनो द्विषाम् ।
सम्मदो कौमुदीकान्तः साक्षाद्दाक्षायणीपतिः ॥ ९७ ॥

दोषधीरोषधीभर्ता मुदः कुमुदबान्धवः ।
दैवाज्जैवातृकः सोमः कोमलो बिन्दुरिन्दुवत् ॥ ९८ ॥

विधुर्विधुरितो राजा राजानिस्तन्द्रचन्द्रमाः ।
दक्षनक्षत्रनाथश्रीः रोहिणी रोहिणीशरुक् ॥ ९९ ॥

स्फारा तारापतिस्तारतारकास्तारकः प्रभुः ।
गिरमाङ्गिरसक्षीबपीवजीवोऽगुरुर्गुरुः ॥ १०० ॥

धिषणो धिषणोदग्रश्चित्रश्चित्रशिखण्डिजः ।
वाचं वाचस्पतिः सौरिर्भूरिर्बृहद्बृहस्पतिः ॥ १०१ ॥

सचिवार्यसुराचार्यसभृङ्गीपतिगीष्पतिः ।
इति शब्दा नृपामात्यनृपपुत्रादिवर्णने ॥ १०२
यथौचित्यं प्रयोक्तव्याः शीघ्रानुप्रासिद्धये ॥ १०३ ॥

अनुप्रासानयनोपायान्तरमाह—

आदिक्षान्तलिपौ कादिक्षान्तशब्दगवेषणम् ।
चित्रानुप्रासयमकशब्दनिश्चयकृद्भवेत् ॥ १०४ ॥

अकारादिक्षकारान्तशब्दे सति अन्ये तत्सदृशाः ककारादिक्षकारान्ताः शब्दा वीक्ष्यन्ते चित्रानुप्रासयमकशब्दनिश्चयो भवति । यथा—

अरशब्दस्य सदृशाः कादिक्षान्तशब्दाः यथासम्भवं लिख्यन्ते। अर कर खर गर घर चर घरट्ट जरया क्षरया विड्वर तरणि संस्तर दर धर नर परस्पर अम्बर भर मर वर शरवण सर हर अक्षर। तथा आर कार गार चार जार दार तार धार व्यापार स्फार भार मार वार सार हार क्षार। तथा। आम काम ग्राम आचाम जामयः तामस दाम धाम नाम पामया याम राम चाम श्याम साम क्षामाः। तथा कीर चीर जीरक तीर नीर धीर भीरवः सीर हीर क्षीर कोटीर कुटीर वानीर महीरमणाः। तथा—अर्ण कर्ण तर्णक पर्ण वर्ण स्वर्ण अर्णव। एवं सर्वशब्देषु शब्दान्तराणि गवेषणीयानि।

**शब्दस्य सकलान् वर्णान् स्वरैः सर्वैः क्रमाक्रमात्।**
**संयोज्य जनिताः शब्दाश्चित्रानुप्राससिद्धिदाः ॥ १०५ ॥**

एते शब्दाश्छन्दोऽभ्यासस्तबके शब्दभेदजशब्दविवरणात् ज्ञेयाः।

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रबिरचितायां
काव्यकल्पलताकविशिक्षावृत्तौ शब्दःसिद्धिप्रताने
द्वितीयेऽनुप्रासस्तबकस्तृतीयः ॥ ३ ॥

## अथ चतुर्थः स्तबकः

अथ मुख्यलाक्षणिकव्यञ्जकानां शब्दानां स्वरूपमाह—

**शब्दो मुख्यो लाक्षणिको व्यञ्जकश्च त्रिधा मतः।**
**मुख्यार्थवाचको मुख्यो व्यापारोऽर्थेऽस्य चाभिधा ॥१॥**

**लक्ष्याश्रितो लाक्षणिको व्यापारो लक्षणाऽस्य तु।**
**व्यङ्ग्ययुक्तो व्यञ्जकोऽस्य व्यापारो व्यञ्जनं मतम् ॥ २ ॥**

साक्षात्सङ्केतविषयो गोपिण्डादिर्वाच्यो मुख्योऽर्थस्तदभिधायी गोप्रभृतिशब्दोऽपि मुख्यः। अस्य मुख्यशब्दस्य मुख्यार्थे व्यापारः सङ्केतापेक्षा, वाच्याऽवगमनशक्तिरभिधा। लक्ष्यलक्षकस्य लाक्षणिकशब्दस्य लक्ष्यनिष्ठो व्यापारो

लक्ष्यावगमनशक्तिर्लक्षणाः । व्यङ्ग्यव्यञ्जनक्षमस्य व्यञ्जकशब्दस्य व्यङ्ग्यनिष्ठो व्यङ्ग्यावगमनशक्तिर्व्यञ्जनम् ।

**मुख्यार्थबाधे मुख्यार्थासन्नत्वे लक्ष्यतेऽपरः ।**
**रूढेः प्रयोजनाद्वाऽर्थो यत्सोक्ता लक्षणा बुधैः ॥ ३ ॥**

मुख्यार्थबाधाऽनुपपत्तेरनुपयोगाच्च 'कर्मणि कुशलः' 'गङ्गायां घोषः'इत्यादावनुपपत्तिः । 'रामोऽस्मि सर्वं सहे' इत्यादावनुप्रयोगः । अत्र प्रस्तावादभिधेयप्रतिपत्तौ रामशब्दोऽनुपयुज्यमानत्वात् बाधितार्थः स्वाभिधेयभूतार्थगामित्वरूपसम्बन्धाद्राज्यभ्रंशप्रवासपितृसीतावियोगादिदुःखपात्रत्वं लक्षयति । असामान्यनिर्वेदादिव्यङ्ग्यं प्रयोजनम् । मुख्यार्थासन्नत्वं पञ्चधा । यदुक्तम्—

अभिधेयेन सम्बन्धात् सादृश्यात्समवायतः ।
वैपरीत्यात् क्रियायोगात् लक्षणा पञ्चधा मता ॥

अभिधेयं मुख्यार्थस्तेन सह सम्बन्धो यथा–'गङ्गायां घोषः'। अत्र गङ्गाशब्दाभिधेयस्य स्रोतसो घोषाधारतानुपपत्तेः मुख्यार्थबाधे योऽयं समीपसमीपिभावात्मा सम्बन्धस्तदाश्रयणेन गङ्गाशब्दस्तटं लक्षयति । गङ्गात्वे एकार्थसमवेतपुण्यत्वमनोरमत्वशैत्यादिप्रतिपादनं व्यङ्ग्यं प्रयोजनम् । न हि तत्पुण्यत्वादिगङ्गातटइत्यादिशब्दान्तरैः स्प्रष्टुमपि शक्यते ।

सादृश्याद्यथा—गौर्वाहीकः गौरेवायं वा । इत्यादौ मुख्यार्थस्य सास्नादिमत्त्वादेः प्रत्यक्षादिप्रमाणेन बाधे अभिधेयेन सादृश्यात्तद्गतजाड्यमान्द्यादिगुणसदृशजाड्यामान्द्यादिगुणयुक्तो वाहीको लक्ष्यते । प्रयोजनं सारोपायां ताद्रूप्यप्रतिपत्तिः । साध्यवसानायां सर्वथाऽभेदप्रतिपत्तिः ।

समवायात्साहचर्याद्यथा—कुन्ताः प्रविशन्तीत्यादौ कुन्तानां प्रवेशानुपपत्त्या मुख्यार्थबाधे साहचर्यात् यथा—कुन्तवन्तः पुरुषा लक्ष्यन्ते । प्रयोजनन्तु रौद्रत्वादीनां सातिशयानां प्रतिपादनम् ।

वैपरीत्याद्यथा—अभद्रमुखे भद्रमुखः । अत्र भद्रमुखशब्दस्य अभद्रमुखे प्रयोगात् स्वार्थबाधः । अतोऽसौ स्ववाच्यभूतस्य भद्रमुखत्वस्य वैपरीत्यादभद्रमुखत्वं लक्षणयाऽवगमयति । प्रयोजनं तु गुप्तासभ्यार्थप्रतीतिः ।

क्रियायोगाद्यथा—महति समरे शत्रुघ्नस्त्वम्, इति । अत्राशत्रुघ्ने शत्रुघ्नशब्दप्रयोगात् स्वार्थबाधः । शत्रुघ्नशब्दश्च अशत्रुघ्ने शत्रुहननक्रियाकर्तृत्वायोगात् लक्षणया प्रयुक्तः । प्रयोजनं च वर्ण्यमानस्य शत्रुघ्नशब्दाभिधेयनृपरूपताप्रतिपादनम् ।

'कर्मणि कुशलः' इत्यत्र कुशान् लातीति दर्भग्रहणायोगात् मुख्यार्थबाधे विवेचकत्वादौ च सम्बन्धे रूढितः प्रवीणपुरुषरूपोऽर्थो लक्षणाव्यापारेण लक्ष्यते। एवं द्विरेफद्विपानुलोम्यलावण्यादयो रुढिशब्दास्तत एतेषु रूढिलक्षणा।

'गङ्गायां घोषः' इत्यादौ प्रयोजनात् लक्षणा। प्रयोजनं च पावित्र्यादि-व्यङ्ग्यम्। तत्त्वमिदम्।

रूढिलक्षणायां तु शब्दस्य वाचको, लाक्षणिकश्चेति नामद्वयम्। अभिधा लक्षणेति व्यापारद्वयम्। प्रयोजनलक्षणायां तु शब्दस्य वाचको लाक्षणिको व्यञ्जकश्चेति नामत्रयम्। अभिधा लक्षणा व्यञ्जनं चेति व्यापारत्रयम्। रूढिलक्षणायान्तु व्यङ्ग्यप्रयोजनाभावात् शब्दस्य न व्यञ्जकता न व्यञ्जन-व्यापारः।

**शब्दव्यापारो निरन्तरार्थनिष्ठोऽभिधा मता।**
**स तु व्यवधानार्थनिष्ठो भवति लक्षणा ॥४॥**

सव्यवधानो मुख्यार्थबाधादिहेतुत्रयान्तरितो यो लक्ष्यस्तटादिरर्थस्तत्र विश्रान्तः शब्दव्यापारो लक्षणा। अभिधैव मुख्यार्थे बाधिता सती अचरितार्थ-त्वाद् अन्यत्र प्रसरतीति तत्पुच्छभूतैव लक्षणा।

**शुद्धोपचारमिश्राऽसौ द्विधा शुद्धाऽपि हि द्विधा।**
**उपादानलक्षणाऽऽद्या परा लक्षणलक्षणा ॥ ५ ॥**

**उपादानं स्वसिद्ध्यर्थं पराक्षेपः—**

यथा पुरे कुन्ताः प्रविशन्ति, अत्र कुन्तैः स्वप्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते। तत उपादानेनेयं लक्षणा।

**परार्थं स्वार्पणं लक्षणेन लक्षणलक्षणा ॥ ६ ॥**

यथा गङ्गयां घोषः। अत्र तटस्य घोषाधिकरणतासिद्धये गङ्गाशब्दः स्वार्थमर्पयतीतीत्यादौ लक्षणेन लक्षणा। अयमभिप्रायः। यत्र शब्दः सर्वथा स्वमर्थमत्यजन् अन्यमर्थं लक्षयति तत्र लक्षणेन तटादिज्ञापनेन लक्षणा स्यात्। यत्र तु स्वार्थमपि वदन्नन्यमुपादत्ते तत्रोपादानेन लक्षणा। इमौ द्वावपि भेदौ शुद्धौ उपचारेणामिश्रत्वात्। यथा गौर्वाहीक इत्यत्र वस्त्वन्तरे वस्त्वन्तरमुप-चर्यते, न तथाऽत्रेति भावः। उपचारमिश्राऽपि चतुर्विधा।

**सादृश्याद्गौणसारोपा गौणसाध्यवसानिका।**

गौर्वाहीको, गौरेवायम् । यत्रोपमानगतगुणतुल्यगुणयोगलक्षणं पुरःसरीकृत्योपमेये उपमानशब्द आरोप्यते तौ गौणौ भेदौ, गुणेभ्य आगतत्वात् गौणशब्दवाच्यौ ।

**सम्बन्धान्तरतः पुनः—**

**विज्ञेया शुद्धसारोपा शुद्धसाध्यवसानिका ॥ ७ ॥**

आयुर्घृतम्, आयुरेवेदम् । अनयोः शुद्धभेदयोः कार्यकारणभावः सम्बन्धः । सादृश्याभावान्न गौणता । यथा आयुष्कारणं घृतम्, तथा न क्षीरादीति क्षीरादिवैसादृश्येन आयुःशब्दान्न व्यभिचरतीति कार्यकारित्वादि प्रयोजनम् ।

**षड्भेदेति लक्षणा—**

उपादानलक्षणा, लक्षणलक्षणा, गौणसारोपा, गौण साध्यवसाना, शुद्धसारोपा, शुद्धसाध्यवसाना इति षड्भेदाः ।

**आरोप्यारोपविषयौ सारोपायां स्फुटावुभौ ।**
**पुनः साध्यवसानायामारोप्यान्तर्गतः परः ॥ ८ ॥**

आरोप्यो गवादिः आरोपविषयो वाहीकादिः । सारोपा सादृश्यहेतुका, एषा उपमानोपमेयस्य विद्यमानरूपत्वात् रूपकालङ्कारबीजम् । यत्रारोप्येण गवादिना निगीर्णतया आरोपविषयस्य वाहीकादेः प्रतीतिः सा साध्यवसाना, इयमतिशयोक्तेर्बीजम् । यथा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥ १ ॥

कार्यकारणभावादिलक्षणायां तु न रूपकादिविषयता, सादृश्याभावात् । यथा—

आयुर्घृतं यशस्त्यागो भयं चौरः सुखं प्रिया ।
वैरं द्यूतं गुरुर्ज्ञानं श्रेयः सत्तीर्थसेवनम् ॥ २ ॥

तथा अन्यापदेशालङ्कारस्य साध्यवसानलक्षणात्वम् । यथा—

"अनर्घ्यः कोऽप्यन्तस्तव हरिण हेवाकमहिमा
स्फुरत्येकस्यैव त्रिभुवनचमत्कारजनकः" ॥

इत्यत्र हरिणेन सह प्रतीयमानस्याभेदः ।

**सम्बन्धा बहवः**

यदुक्तम् "एकशतं षष्ठयर्थाः"। क्वचित्तादर्थ्यादुपचारः। यथा इन्द्रार्थाः स्थूणा इन्द्रः। क्वचित् स्वस्वामिभावाद्यथा—राजकीयः पुरुषो राजा। क्वचिदवयवावयविभावाद्यथा—अग्रहस्त इत्यग्रमात्रेऽवयवे हस्तः। क्वाऽपि तात्कर्म्यात्। यथा—अतक्षा तक्षा। क्वचिन्मानाद्यथा—आढकमश्नाति। क्वचित् स्थानाद्यथा—मञ्चाः क्रोशन्ति। इत्यादयः सर्वे यथालक्ष्यं लक्षणीयाः। यदाहुः — सहचरणस्थानतादर्थ्यवृत्तिमानधरणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः। एषु शुद्धा लक्षणा।

काचित् रूढितः, काचित्प्रयोजनात्, काचित्सारोपा, काचित्साध्यवसाना। इति लक्षणाविचारः।

अथ लक्षणार्हाः केचिच्छब्दाः कथ्यन्ते—

चित्रेन्द्रजालवाच्यद्विर्भावस्वप्नयमकसंवादाः।
द्वैगुण्याभिनयकथाद्विरुक्तिपर्यायवक्रपुनरुक्तिः॥ ९॥

रूपावस्थार्थावपुर्भवान्तरं परिणतिविवर्त्तौ।
अनुवादानुप्रासानुकृतिच्छायाप्रतिबिम्बशब्दौ च॥ १०॥

प्रतिवीरमल्लनायककविवेशोबन्धुरनुकुलः।
प्राण्याज्यज्ञातिसुहृद्दायादसनाभिसहचरसतीर्थ्याः॥ ११॥

सब्रह्मचारिनीलीरागसहाध्यायिसदृशसध्यञ्चः।
गणनाधिकः सवर्णः संवादो सांयुगीनरिपू॥ १२॥

अधिदैवतविद्यागुरुकुलनाथकुलपुरः पुरुषाः।
ओङ्कारचक्रवर्त्तिक्षेमङ्करसार्थवाहतीर्थानि॥ १३॥

ज्येष्ठसभापत्यग्रेसरोत्तमर्णप्रतीक्ष्यजितकाशि।
अद्वैतवादिधुर्योल्लाघनगृहमेधिनोऽध्यक्षाः॥ १४॥

तत्त्वब्रह्मोपनिषद्रहस्यचैतन्यधृतपरात्मनः।
सौरभ्योत्कर्षरसाभोगानन्दाभिजात्यपरभागाः॥ १५॥

लयसर्वस्वविलासास्तण्डुलनिर्यासभाग्यमज्जानः।
जीविततात्पर्यार्थव्युत्पत्त्यपवादमर्ममकरन्दाः॥ १६॥

साम्राज्यसिंहनादाहङ्कारैश्वर्यसंस्कृतविपाकाः।
सारोद्धारनिदानव्याख्याटीकाचरित्रविश्रम्भाः॥ १७॥

मूलद्रव्यविवेकव्याकरणनिरुक्तसौष्ठवाभ्युदयाः ।
सौन्दर्योन्मेषनवीनत्वप्ररोहसम्भ्रमोत्साहाः ॥ १८ ॥

वैदग्ध्यावष्टम्भावुत्सवनवनोतयौवनादेशाः ।
महिमनिघण्टौद्धत्याऽन्तरङ्गपूर्वोक्त्यधित्यकास्वेच्छाः ॥ १९ ॥

व्याप्तिर्बहुघनपीवक्षीबमहोद्दामतुङ्गताः प्रौढिः ।
सर्वाभिसारवृद्धिव्यूहव्यासाट्टहाससङ्घट्टाः ॥ २० ॥

विष्कम्भवज्रपातानध्यायापह्नवाविसंवादाः ।
केतूदयान्तरायावातङ्कोपप्लवाध्यवस्कन्दाः ॥ २१ ॥

प्रत्याख्यानान्तर्द्धिव्याषेधविडम्बनान्यतीचाराः ।
अनुपदारुन्तुदकद्वदवैरङ्गिकनास्तिकाः पुरोभागी ॥ २२ ॥

स्थायी द्रव्यं किट्टस्तुषपिण्याकौ पलालपदधूली ।
उद्वाहपूर्वरङ्गप्रतिमाप्रस्तावनाटचसम्फेटाः ॥ २३ ॥

अङ्गोद्वर्तनशाखापुरशाखामङ्गलावतरणानि ।
प्रश्नोत्तरप्रहेले कलभकिशोरौ प्रवालमञ्जर्यौ ॥ २४ ॥

निर्माल्यभङ्गिकरणीकैतवपाखण्डिकर्णिकाभेदाः ।
तर्णकपरागसैन्योपपदसमस्याकलान्तरोत्सर्गाः ॥ २५ ॥

प्राकाम्यवस्तुवाचिकसम्बोधनपादुकाहित्थानि ।
व्यवहारकिंवदन्तीप्रभूतविज्ञानकारिकोपाधिः ॥ २६ ॥

बहिरङ्गोपश्रुतिमृगतृष्णानासीरपादपीठानि ।
व्यापृतिदिग्धपरोक्तागण्डूषोपत्यकाप्रहसनानि ॥ २७ ॥

युवराजशिष्यसैनिकसचिवप्रतिहारमण्डलेशगणाः ।
वैहासिकसेनानीवैतालिकबटुपदात्यनुगाः ॥ २८ ॥

ग्रामीणपारिपार्श्विकनान्दीचटुकारभक्तपरिवाराः ।
प्राकृतपरान्नमायिकदासपराधीनयद्वदास्त्रधराः ॥ २९ ॥

वैमात्रेयेर्ष्यालूपरिचारकभर्तृहारकनिष्ठाः ।
अधमर्णराजवंश्यौ वन्दारुरताञ्चलस्फुलिङ्गकणाः ॥ ३० ॥

दिङ्मात्रमेकदेशः खण्डं बालोऽङ्कुरः शिशुता ।
सङ्क्षेपक्षामत्वावयवकलाशीकरलहर्यः ॥ ३१ ॥

इत्याद्या लक्षणाः शब्दाः सदृशत्वोपयोगिनः ।
उपमाने क्वचिद्योप्या उपमेये क्वचित्तथा ॥ ३२ ॥

उपमाने यथा—

इन्दुर्वक्त्रस्य वीप्सासदनमुपकथा पादयोः पङ्कजाली
पर्यायोऽलिः कबर्या ननु तनुमहसां कर्णिका कर्णिकारम् ।
आभासः कुम्भिकुम्भद्वयमुरसिजयोः कामकोदण्डदण्डः
पाखण्डं भ्रूलताया रतिरभिनयनं पश्य रूपस्य यस्याः ॥ ३ ॥

उपमेये यथा—

व्याषेधो धरणीधरेशितुरनध्यायः सुधाया विधो-
रन्तर्द्धिर्धनदाचलस्य निधनं दुग्धोदसिन्धोः पिधा ।
प्रत्याख्यानममानवद्विपमहादेहद्युतेर्निह्नवो
जाह्नव्यास्तव भूभुजङ्गयशसां भारो दिशां हारति ॥ ४ ॥

अन्येऽपि लक्षणाशब्दा लिख्यन्ते । यथा—लुण्टाक जल्पाक गृहयालु स्पृहयालु घस्मर मेदुर भङ्गर छिदुर विदुर जागरूक वावदूक विकस्वर प्रमहर सत्वर जित्वर गत्वर कम्प्र उन्मदिष्णु वैतण्डिक मायिक तुन्दिल तुण्डिक पिचण्डिल पिचण्डिक तुण्डिल तुण्डिक शुभंयुः दन्तुर जङ्घाल दंष्ट्राल भुजाल पांसुल प्रज्ञाल प्रज्ञिल रजस्वल फेनिल वाचाल वाचाट मुखर पङ्किल इत्यादयो विद्वन्नाम चौर महोत्साह उद्धत कोपन वैरङ्गिक कर्मशूर अलङ्कर्मीण कर्मठ धृष्ट सज्जन बन्धुगोत्रादीनां नामानि । एवं प्रकाराः शब्दाः लक्षणासाधका यथौचित्यं प्रयोज्याः । यथा—

विप्रोऽप्ययं द्रुतमहीनमहीनकीर्ति-
र्लुण्ठाकशक्तिरपसादगुरुप्रसादः ।
वेध्यं प्रपातयति पश्यत रे नरेन्द्राः
कीर्तिस्मरन्मनसि गौररुचं न कृष्णाम् ॥ ५ ॥

॥ इति श्रीजिनदत्तसूरिशिष्यमहाकविपण्डितश्रीमदमरचन्द्रविरचितायां
कविकल्पलतावृत्तौ शब्दसिद्धिप्रताने लाक्षणिकस्तबकश्चतुर्थः ॥ ४ ॥

॥ सम्पूर्णश्चायं शब्दसिद्धिप्रतानो द्वितीयः ॥ २ ॥

## अथ तृतीयप्रताने प्रथमः स्तबकः

### ।। अथ श्लेषसिद्धिप्रतानः ।।

तत्र पूर्वं श्लेषव्युत्पादनं यथा—

**वर्णाकारक्रियाधाराधेयसम्बन्धिबन्धवः ।**
**द्विट्पत्नीप्रियसम्पर्किस्वामितुल्यगुणादय ।। १ ।।**

**एषां स्यान्नामभिः श्लेषो नानार्थैर्वर्ण्यवस्तुनि ।**
**भङ्गश्लेषोऽधिककसन्मुख्यैः पूर्वाग्रगैः पुनः ।। २ ।।**

वर्ण्यवस्तूनां वर्ण्यादिनाम्नां मध्याद्यन्नाम द्व्यर्थं त्र्यर्थं नानार्थं वा भवति तेन नाम्ना श्लेषः कार्यः। यथा धवलार्जुनहरिगोप्रभृतयः शब्दाः ।

भङ्गश्लेषस्तु वर्ण्यवर्ण्यादिनाम्नः पूर्वगतैरधिकादिभिरग्रगतैः कसदादिभिः सामान्यशब्दैरर्थे मिलति यथासम्भवं कार्यः । यथा कमलशब्दस्य मल इति अग्रेतनाक्षरार्थे मिलति पूर्वाक्षरकस्त्रोटचते । यथा अधिकमलशाली, अधिकशब्दः सामान्यः । तथा करकशब्दस्य कर इति पूर्वाक्षरार्थे मिलति उत्तराऽक्षरकस्त्रोटचते । यथा करकसललक्ष्मीः । कसच्छब्दः सामान्यः । पूर्वं पूर्वाक्षराणां त्रोटमाय पूर्वप्रयोज्याः सामान्यशब्दा यथा—

**अधिकस्वकस्वकीयकसश्रीकाः सुखसुगौ पुरोगश्च ।**
**ज्ञेयाः समानोच्चसदास्वच्छाः सदाच्छसज्जौ च ।**
**तज्ज्ञाभिज्ञसुखज्ञाः शोभितविभ्राजितादयः स्वस्थः ।। ३ ।।**

सुखदं तद्धि शोभा बद्धसौन्दर्यप्रभृतितो बद्धम् । सम्पन्नसुशोभनलोलुपसम्पन्नवसगौरवमहाभाः । बहुशोभनसदाशुभबहुभाः परमसमानयामनोहृद्यम् । पीवरसुरुचिरमधुरा मञ्जुलपृथुलौ स्वभावतः शंश्च । सुमुखदशः समहासः ससमग्रहृपरमहौ च बहुलक्षः ।

एतैः शब्दैः पदानां पूर्वाक्षराणि त्रोटचन्ते । यथा—

सश्रीकपालिस्थितिः कैलासः, सरोवत् । स्वकलङ्काभोगः शशी, रावणवत् । सुखरोचितः कुलालः, सुकृतिवत् । सुखलीनस्तुरगः, सुकृतिवत् । सुखद्योतस्तपात्ययो, नृपवत् । पुरोगबलस्थितिः सारङ्गधनुः, मल्लवत् । समानघनरसभासितं स्मरः, नृपवत् । उच्चामरश्रीः नृपतिः, इन्द्रवत् । सदाऽच्छगणराजितं गोस्थानं

रुद्रस्थानवत्। सज्जं वोरगणं बिभ्रत् वनं, नृपवत्। अभिज्ञातिस्थितिः कुलीनो, विदग्धगोष्ठीवत्। शोभितरङ्गान्वितो जलधिः, नटवत्। स्वस्थपुटताशाली शैलमार्गी, मृदङ्गवत्। सुखदानस्थितिः वदान्यः, शाकटिकवत्। शोभाबहुबलान्वितो, रुद्रो, नृपवत्। सुशोभनगरस्थितिः सुनृपः, शिवकण्ठवत्। लोलपवनस्थितिः सागरतरङ्गः, गिरिवत्। सम्पन्नसुधाभोगः पार्थिवः, सुरवत्। बहुशो भवनान्वितं पुरं, गिरिवत्। परमहेलाशाली द्वेधापि कामुकः। मनोहृद्योऽधस्थितिः युद्धभूमिः, धेनुवत्। सुरुचिरमणीरमणीयः पाणिग्रहमहो, रोहणवत्। पृथुलक्षणं गृहम्, चन्द्रवत्। स्वभावशरणधुरीणो द्वेधा सुभटः। समहासकलः सज्जनः, पूर्णिमेन्दुवत्। परमहंसितश्रीः, सुकृतः, शिववत्। बहुलक्षपणं जैनदर्शनं, कुक्कुटायोधनवत्। एवमन्यस्वरान्तैरपि सामान्यशब्दैः श्लेषः। यथा—सदारोपचितो युवा, धनुर्धरवत्। बहुधान्यपुष्टश्रियान्वितः शरद्, वसन्तवत्। अग्रतोरणशोभं देवगृहं भटवत्। अथान्त्याक्षरत्रोटनायान्त्यप्रयोज्याः सामान्यशब्दाः, यथा—

कुलसत्करोचितकसत्कान्ताः कामात् क्रमादुदितः।
कूटोपचितखरोचितखचितागतगाहितौ गुरूढश्च॥

गूढो गीतं घाटोपचितं घोरीकृतश्च घनवर्हि।
वान्तश्रितश्च रोचितचक्राञ्चितरोचिताश्च यतः॥ ४॥

छविराजितछविलासिप्रमुखाच्छलसच्छटोपचितौ।
जाग्रगततोलसज्जातिज्ञातिज्ञानवर्धिनो ज्ञातम्॥ ५॥

टोपतिरोहिततनतस्तारीचितततनावर्धितुवराः स्युः।
तान्तस्ततस्तुतश्च स्थपुटस्थामोदितस्थिरचिताश्च॥ ६॥

स्थास्थितवर्द्धिकरोचितदान्ताश्चामोदितो दूरात्।
धनवर्धिधरोचितधवला धामोदितो धुरीणश्च॥ ७॥

धीरोचितो धनव्यासङ्गोऽनवसन्नवर्द्धिनव्याप्ताः।
नामोदितनियतोदितनिचितनिभासितनिकायनिहिताश्च॥ ८॥

निकरनिवहौ च नियमो निचयनुतो न्यूनवर्द्धितोन्यस्तम्।
प्रवरप्रमुखप्रकरप्रकामभारोचितप्रधानाः स्युः॥ ९॥

प्रबलप्रसभप्रकटभावपूतप्रभूतपिहिताः स्युः।
पुरतः प्रियमोदितकप्राग्रप्रामोदितप्रकाराः स्युः॥ १०॥

प्राग्रहरपीनवर्द्धिप्रस्तावप्रांशवः प्रकाशश्च।
प्रविभासितः परोचितपिनद्धपरिवर्द्धिपरिचितस्फीताः॥ ११॥

स्फारोचितश्च फलसहितानबलसद्वरोचितवलक्षाः ।
वामोदितो विरोचितवर्द्धिबसद्वासनाव्याप्ताः ॥ १२ ॥

विपरीतविप्रकृष्टवरचिताश्चव्रातततोऽव्यवहिताः स्युः ।
विलसितविकसद्विचरद्विभ्राजिभ्रासिकासिसमाः ॥ १३ ॥

विसरविमानवितर्का विशालविभ्रमविनोदविकटाः स्युः ।
विक्रमविकल्पविस्मयवीतव्यूढव्रजव्यूहाः ॥ १४ ॥

भासितभारोचितभानवर्द्धिभीमोदितभ्रान्तिः ।
भासितभूरीकृतभावबद्धभूयोगतो भरचितश्च ॥ १५ ॥

उदितं भ्रमाद्भूरोचितमहितो महसन्प्रदेशौ च ।
मधुरो मोहितमोदितमितो मता मानवर्द्धियतयाताः ॥ १६ ॥

यानाद्वद्धीरमरामोदितजितरचितरोचितारूढम् ।
रोपचितरमोहितरूपचितलसल्लासितालवसत् ॥ १७ ॥

लातं लोभामितलीनवर्द्धिनो लूनवर्ही च ।
शतशकलशबलशान्ताः स्वकामसार्थौ स्वभावसमुदायाः ॥ १८ ॥

समसीमोदितदृङ्मोदितसितसारोचिताः सभासकलौ ।
सद्योतिसंभाजनसारचितस्वेच्छास्वतन्त्राश्च ॥ १९ ॥

सततसमर्यादससीमसदेशसमानहासिता हारो ।
हृतं हितश्च हसितं ह्रीनाद्वर्धीहसंश्चापि ॥ २० ॥

क्षिप्राग्रं च क्षुद्रव्याप्तं चैव क्षमोदितं क्षान्तम् ।
एते पुरतः शब्दा अन्येऽप्येवंविधा बुधैर्बोध्याः ॥ २१ ॥

एतैः शब्दैः पदानामन्त्याक्षराणि यथा सम्भवं त्रोटचन्ते, यथा—

फलकसल्लक्ष्मीः युद्धकारः, फलितद्रुमवत् । नरकान्तस्थितिर्विष्णुः, नृपवत् । शङ्खचिताटोपं भ्रच्छङ्खवादकः, पुण्यनरवत् । मुद्गगाहितो मरुदेशः, पूर्णे हितवत् । प्रियं गूढविभवं बिभ्रद्वनं, वेश्याजनवत् । परिघनवर्द्धिस्थितिः पुरप्रतोली, धर्मपरवत्, प्रावृट्कालवद्वा । कचरोचिता वेणी, समुद्रवीचीवत् । तापिच्छविराजितो, वनोद्देशो, रविवत् । सदा गजातिश्रीर्नृपो, वनवत् । रसज्ञानवर्धिस्थितिर्द्विरसनाधिपो, रसिकवत् । शृङ्गाटोपचितो वीरवर्गः, गिरिवत् । सुरततश्रियं बिभ्रद् वेश्यावर्गः स्वर्गवत् । स्वास्थामोदितश्रीः सुरेन्द्रो, मल्लवत् । कलदान्तस्थितिः, स्वर्णालङ्कारकारी, दक्षवत् । सुधामोदितश्रीः स्वर्गो, रविवत् । उपायनवसल्लक्ष्मीर्द्वेधा नृपः । कच्छपरचितश्रीर्जलाशयो, ग्रामवत् । अधिकफलसत्स्थितिर्वसन्तः,

सुस्वामिसेवावत्। केशवरोचितश्रीर्द्वारिकापुरी, सुकेशीवत्। करभाचितो मरुदेशो, रविवत्। कलमहसल्लक्ष्मीः शरत्कालः, सपुण्यवत्। वलयतः स्थितिं बिभ्रत् नारीप्रकोष्ठो, मल्लवत्। तिमिरोचितश्रीः कुहूः, समुद्रवत्। कुण्डलसल्लक्ष्मीः कपोलपाली, सुधावत्। मानवसत्स्थितिः मर्त्यलोको, मानिवत्। गिरिशतश्रियं बिभ्रत् कैलासः, पृथ्वीवत्। मानसमोदितश्रीः श्रीदपुरीप्रदेशो, मानिवत्। कलहसितस्थितिः नारदः, कामिवत्। बलक्षमोदितश्रीः हिमाद्रिः, शान्तवत्। एवमन्यैरपि सामान्यशब्दैः श्लेषः साध्यते।

**अपूर्वश्चाऽद्वितीयश्चामध्यमोऽनन्त इत्यपि।**
**अमात्रो मात्राधिकश्चातिक्रान्ताद्वलिताक्रमः॥ २२॥**

**केवलोऽर्थान्तरत्यन्तादिभ्यश्च पुरतो गुरुः।**
**श्लेषमुत्पादयेदेतैः शब्दैरुपपदस्थितैः॥ २३॥**

क्रमेणोदाहरणानि। अपूर्वत्रिदशाभोगः। पक्षे दशाभोगः। सुमनः गीर्वाण वृन्दारक विबुध अमृत दानव मीमांसा पिनाक कुमार केशव कन्दर्प, इत्यादिशब्दानामादौ अपूर्वशब्दः प्रयोज्यः। अद्वितीयकपालिश्रीः पक्षे कलिश्रीः। अमर दानव स्वयम्भूः आराम पिनाक वृषाङ्क कमल भास्कर, इत्यादिशब्दानामादौ अद्वितीयाऽमध्यमशब्दौ प्रयोज्यौ। अनन्तदानवश्रीः। पक्षे दानश्रीः। दैवत असुर प्रजापति भारती मदन नन्दक, इत्यादिशब्दानामादौ अनन्तशब्दः प्रयोज्यः। अमात्रकालस्थितिः। पक्षे कलस्थितिः। जार वार स्फार दार भार चार हार, इत्यादिशब्दानामादौ अमात्रशब्दः प्रयोज्यः। मात्राधिककेवलज्ञानः। पक्षे केवलज्ञानः। कृपण कमल कल बल हर, इत्यादिशब्दानामादौ मात्राधिकशब्दः प्रयोज्यः। अतिक्रान्तक्रमभारतीस्थितिः। पक्षे तीरभास्थितिः। वलितक्रमपोतवैभवः। पक्षे तपोवैभवः। हर नन्दक बाल मार कर्तन सह भावि राजा भार्गव धारा लङ्का रसा दिवा दीन नीलिमा राक्षस रुत चारु पुत्र शाप भान पात्र रद कपि छग बलभी, इत्यादिशब्दानामादौ अतिक्रान्तक्रम-वलितक्रमशब्दौ प्रयोज्यौ। केवलकोरकस्थितिः। पक्षे करकस्थितिः। कम्बल कोमल दाव प्रमोद, इत्यादिशब्दानामादौ केवलशब्दः प्रयोज्यः। अन्तर्गुरुकृपणस्थितिः। पक्षे कृपाणस्थितिः। शरज, प्रमद निकर विकर इत्यादिशब्दनामादौ अन्तगुरुशब्दः प्रयोज्य। अत्यन्तगुरुकमलास्थितिः। पक्षे कमलास्थितिः। पद्म राम बाल वाम, इत्यादिशब्दानामादौ अत्यन्तगुरुशब्दः प्रयोज्यः। आदिगुरुबलस्थितिः। पक्षे बालस्थितिः। वर कल दह हर वर, इत्यादिशब्दानामादौ आदिगुरुशब्दः प्रयोज्यः।

अथ वर्णाक्षेपेण श्लेषप्रकारान्तरमाह—

क्रमतोऽपूर्वोर्चिताचितासितावाहितोहितोरूढाः ।
उद्योतिकान्तिकासितकामोदितकुलसिताः कसंश्चापि ॥ २४ ॥
उदितं क्रमाच्च कूटोपचितं खचितं सुखं पुरोगचितम् ।
गाहितगुरूढगूढघनवर्हिघोरीकृता ज्ञेयाः ॥ २५ ॥
घाटोपचितोच्चरोचितचक्राञ्चितकरोचिताश्चान्तम् ।
छविराजिमुखाश्च लसन् सज्जं जालोचितश्च जातियुतः ॥ २६ ॥
ज्ञानाद्वर्धी टोपचिततिरोहितताानवर्द्धिनो वोध्याः ।
तारोचितस्थिरोचितस्तिरोहितस्थानवर्द्धिनो ज्ञेयाः ॥ २७ ॥
स्थामोचितदूरोचितदान्तो धीरोचितश्च धनवर्धी ।
धामोदितो धरोचितनव्याप्तनिचितनवर्द्धिनियताश्च ॥ २८ ॥
निहितनिबद्धपरोचितपिहितपिनद्धप्रभासितप्रमुखाः ।
प्रान्तप्रकटप्रवरप्रमोदिताः पीनवर्द्धी च ॥ २९ ॥
पूरोचितप्रमोदितप्राग्रप्रभासिताः स्फुटोपचितम् ।
स्फारोचितश्च फलसद्विलसद्वामोदिता वसद्व्याप्तौ ॥ ३० ॥
विपरीतविकटसम्पन्नविभासितवरोचितव्यूढाः ।
विप्रात्कृष्टोद्भासितभारोचितभानवर्द्धिभूव्याप्ताः ॥ ३१ ॥
भासितभीमोदितमोहितमहसन्मानवर्द्धिनो ज्ञेयाः ।
यानाद्वर्धी रोचितरचितौ रोपचितरूढरूपचिताः ॥ ३२ ॥
रामोदितलसितलसल्लाभाश्रितलूनवर्द्धिनो लवसत् ।
लीनाद्वर्द्धी शुभ्राजितशकलशुभासिताः सुशोभश्च ॥ ३३ ॥
सहसितसततसमीहितसारोचितसोमोदिताश्च सद्योती ।
सबलं हासितहीनावर्द्धिक्षिप्राग्रकमोदितकाः ॥ ३४ ॥
शब्दैरेभिरपूर्वाद्यैः पूर्वभागप्रयोजितैः ।
शेषाय शब्दमध्येषु निक्षिपेद्वर्णमण्डलीम् ॥ ३५ ॥

*यथा*—अपूर्वसुरस्थितिः । पक्षे असुरस्थिति । अर्चितगजयुतः । पक्षेऽङ्गजः । आचितखेटकशोभी । पक्षे आखेटकः । उद्योतिपरागपूर्णः । पक्षे उपरागः । कामोदितसरःस्थितिः । पक्षे कासरः । एवं सर्वत्र । खचितद्योतयुतः । गाहित-जारोहः । घनवर्द्धिस्मरः । वरीचितपलश्रीः । छविराजिगणः । जालोचितघनः ।

पुरोज्ञानवर्द्धिरसप्रसरः। अग्रेसदाटोपचितकरश्रीः। तारोचितरणश्रीः। स्थामोदितपुटः। दामोदितनवश्रीः। धरोचितबलः। नव्याप्तक्षत्रराजी। परोचितवनशोभी। प्रमोदितकटस्थितिः। स्फुटोपचितरणश्रीः। व्याप्तपक्षस्थितिः। वामोदितमनःस्थितिः। भारोचितरतश्रीः। महसत्सूरशोभी। यानवर्द्धिबकस्थितिः। रचितमणिभासुरः। लसितगुडरम्यः। शकलयुक्तः। सततगोत्रस्थितिः। पुरोहसितपटयुक्तः। क्षमोदितपणस्थितिः। एवं वर्णक्षेपकशब्दा अन्येऽप्यूह्याः। यथा—कोपपद टोपपद रोपपद लोपपद कूपपद भूपपद यूपपद रूपपद। तथा कराजिरकान्तारादिशब्दानामग्रेऽजितशब्दः प्रयोज्यः। यथा—कराजिताद्याः कविद्दविरविप्रमुखास्ताथ नीवी अटवी मुख्यविकारान्तवीकारान्तादिशब्दानामग्रे आप्तशब्दः प्रयोज्यः। यथा—छव्याप्तनोव्याप्ताः तथा अवर्णोपलक्षितरेफान्तशब्दानामग्रे उपचितोपयुक्तशब्दौ प्रयोज्यौ। करोपचितवरोपयुक्तः जरोपयुक्तः। उवर्णोपलक्षितरेफान्तशब्दानामग्रे उपचितोपयुक्तशब्दौ प्रयज्यौ। यथा—तरूपचितमरूपयुक्ताः। अथ वर्णाकर्षणेन श्लेषप्रकारान्तरमाह—अकाऽर्काऽगाऽग्रचाऽग्राऽथाऽर्घ्याऽर्चाऽर्च्याऽर्चिरच्छाजाः। अज्ञाऽटाद्याऽट्टाऽण्यणवत्राऽर्त्यतोऽत्यथोऽर्थोऽथो।

अक अर्क अग अग्रच अग्र अथ अर्थ अर्घ्य अर्चा अर्च्य अर्चिः अच्छ अज अज्ञ अट अद्य अट्ट अणि अणु अत्र अर्ति अतः अति अथ अर्थं अथो।

**अदोऽद्रिरब्दोऽधोऽर्द्धाध्वाध्यनोऽन्वन्या अपाप्यवि।**
**अर्वावाभ्यभ्राम्ययम् अमार्या येऽयमय्ययाः ॥ ३६ ॥**

अदः अद्रि अब्द अधः अर्ध अध्व अधि अनः अनु अन्य अप अपि अवि अर्वं अव अभि अभ्र अमी अमू अमा अर्या अये अयम् अयि अयः।

**अरमरुररेर्यरास्त्राल्पाल्यलमवाश्रवोऽश्रिरसौ।**
**अश्रास्वहो अहरहमर्हाह्यक्ष्यक्षा विवर्जितविहीनौ ॥ ३७ ॥**

अरं अरु अरे अरि अर अस्त्र अल्प अलि अलम् अश्व अश्रु अश्रि असौ अश्र अमु अहो अहः अहं अर्ह अहिः अक्षि अक्ष।

**अखिलान्यूनाजस्रानन्ताभोक्षण्याधिकापरापाराः।**
**अतुलानेकानल्पाशेषासक्तानघामदादभ्राः ॥ ३८ ॥**

**अहहामरासुराद्या इत्याकारादयो हि ये।**
**योजयेत् तान् यथौचित्यं वर्णाकर्षणहेतवे ॥ ३९ ॥**

एते ह्यन्येऽपि द्वयक्षरास्त्र्यक्षराश्चतुरक्षरा वा अकारादयः शब्दानामादौ वर्णाकर्षणाय प्रयोज्याः, श्लेषो भवति। यथा—अककमलशाली, पक्षे मलशाली। अच्छच्छगणशाली पक्षे गणशाली। अलङ्केशयुक्तः, पक्षे केशयुक्तः इत्यादिशब्दाः ज्ञेयाः।

**ककोकुकूखखुगगौघोचचाचि चयस्तथा।**
**जातातोस्थिददादूधधोननोपपापुपू ॥ ४० ॥**
**स्फस्फा वाबो ववेबैभभामामुशशाशूशंसासोसुसू।**
**सौहहाहोक्षक्षाक्षीक्षौ एतेषां रहितः पुरः ॥ ४१ ॥**

एतेषां वर्णानामग्रे रहितशब्दः प्रयोज्यः। करहितकीरहितेत्यादि। एतैः शब्दैर्वर्णा आकृष्यन्ते। करहितकमलशाली, पक्षे मलशाली। कीरहितबन्धुकीयुतः, पक्षे बन्धुयुतः। इत्यादि ज्ञेयम्।

**स्मेरज्वरस्वरस्मरद्वारस्थावरतुषारमुख्यानाम्।**
**पारावारादीनां रान्तानामग्रतो हितो योज्यः ॥ ४२ ॥**

यथा—स्मेरहित, ज्वरहितेत्यादि। स्मरहितस्मरणशाली, पक्षे रणशाली। इत्याद्यूह्यम्। एवमन्येऽपि शब्दाः, यथा—अहीनम् अलङ्कृतं नूनम्। लकारान्त-लाकारान्तशब्दानामग्रे उपयुक्तः शब्दः प्रयोज्यः। जलोपयुक्तः बिलोपयुक्तः कलोपयुक्तः वेलोपयुक्तः। आकारोपधपकारान्तशब्दानामग्रे नोदशब्दः प्रयोज्यः। तथा उपपाद, कृतरचितादिशब्दाः प्रयोज्याः। यथा। कृततापनोदः, रचित-वापनोदः। अथ श्लेषसाधकाः ककारान्ताः ककारादिप्रमुखाश्च शब्दा लिख्यन्ते। यथा—नाक निष्क पिक काक शुक बक पङ्क भेक घूक स्तोक अलीक पुलक अंशुक गर्भक ताटङ्क हंसक कृषिक कर्षक कौतुक श्यामाक नरक कलङ्क नन्दक तारक करक गुह्यक विपाक अलिक कटक स्थानक स्तबक बन्धूक गण्डक जाहक चन्द्रक तर्णक व्यलीक विटङ्क जालक स्वस्तिक मणिक पथिक हतक लग्नक नाविक गणक कविक समीक अनीक फलक बन्धुक पृथुक दारुक जनक अम्बक तिलक अंशुक अलक नालिक रजक जालिक लब्धक स्फोटक आर्द्रक माक्षिक पातक तलक उदक अधिक मस्तक वनौक अङ्गारक अपवरक उच्छीर्षक प्राघुणक वनीपक दौवारिक आरालिक प्रबोधक विशेषक भयानक रणरणिक वैकटिक। एषामग्रे आकर कर कल करि कपि कवि कम्र कशा कन्या कर्ण कच कफ कच्छ कपालि कदर्य कपर्द कलङ्क कदली करञ्ज कपाल कलिङ्ग कपोत कपाट

करभ कवच कदन कबरी कर्ण कज्जल कपोल कबन्ध कमठ कमल कदम्ब कपट करवीर कवन कमण्डलु करवाल कर्णधार कम्बु कङ्क कण्डु कन्द कङ्काल कन्धरा कङ्कट कम्बल कन्दर कन्दर्प कङ्कण केवलि कोल कोयष्टि कोप कौपीन केलि केतु केशव कोदण्ड केश केदार कोद्रव कैरव केसर चक्र तक्र वक्र शक्र शुक्र नक्र शुल्क।

अग्रे—क्रोड क्रव्य क्लेश क्रम क्रोधन क्रमेलक क्रकच राका शङ्का कालिका बलाका बालिका ऊर्मिका नासिका तारका कृत्तिका उत्कलिका। अग्रे—कासि काष काकु काञ्ची काक काम कान्ता काण्ड कामि काच कारु कार काकोल कापेय कासर कानन कान्तार काञ्चन काश्यपी कारण कातर कासार नाकि पिनाकि वातकि वर्द्धकि श्रीभृक्षकि प्रचलाकि। अग्रे—किल किरण किंशुक किसलय किङ्कर शुकी पिकी बन्धकी वल्लकी आमलकी।

अग्रे—कील कीर कीनाश कीलाल काकु रङ्कु न्यङ्कु शङ्कु। एषामग्रे—कुल कुच कुश कुट कुक्षि कुम्भि कुण्ड कुन्त कुण्डल कुन्तल कुशीलव कुरबक कुलबधू कुलाल कुहर कुवेणी कुरङ्ग कुलीन मुख मख पुङ्ख नख सुख दुःख शङ्ख। अग्रे खर खनि खग खश खर्ज खल खलीन खद्योत खचित खण्ड खञ्जन खञ्ज शिखा शाखा रेखा लेखा परिखा विशाखा। अग्रे—खानि खात सखि सखी। अग्रे अखिल खिल आखु। अग्रे खुर तुङ्ग स्वर्ग रङ्ग मुद्ग मङ्ग वङ्ग पूग खग छग छाग राग याग वेग रोग उरग नाग भोग युग पुरोग तडाग तरङ्ग पन्नग रथाङ्ग भुजङ्ग चतुरङ्ग अङ्गराग शताङ्ग अनुग भुजग अध्वग उत्तरङ्ग कलिङ्ग सारङ्ग। अग्रे गदा गज गति गद्य अङ्गद गर्भ गद गरल गल गर गजराज गजारोह गङ्गा गण्ड गन्ध आगन्तु गोधा गौर गोसर्ग गौधेय गोधन गाङ्गेय गौरव सुरङ्गा आपगा निम्नगा। अग्रे गान गात्र अगाध भङ्गि भोगि। अग्रे गिरि भुजगी।

अग्रे गीति पङ्क कङ्क प्रियङ्गु। अग्रे अगुरु गुरु गुह आगू। अग्रे गूढ गूह गूहनम्। आगः रुग् वाग् त्वग् स्रग् ईदृग् प्राग् अर्वाग् द्राग्। अग्रे अग्नि अग्र व्यग्र समग्र उदग्र मण्डलाग्र। अग्रे ग्राव ग्राम ग्रीवा ग्राह ग्रामणी। अघ मेघ सङ्घ उङ्घ परिघ। अग्रे घन घोर अघ घस्मर घनरस जङ्घा। अग्रे घाट घास व्याघ्र। अग्रे आघ्राण प्राज्ञ यज्ञ अभिज्ञ क्षेत्रज्ञ दैवज्ञ प्रज्ञा अवज्ञा प्रतिज्ञा रसज्ञा। अग्रे ज्ञाति ज्ञानि ज्ञान। नीच काच कुच कच उच्च रोमाञ्च वचस्। अग्रे चक्र चय चमू चर चरु अचल आचमन चरण चपल अञ्चल चञ्चल चल चञ्चु वञ्चु चण्ड तञ्च। अग्रे चारु चाप चामुण्डा चारण चामर चरित्र शुचि रुचि। अग्रे चित्या चिता आचित चिद्रूप काञ्ची वीची शची प्राची विपञ्ची घृताची। अग्रे चीर चीवर चञ्चु पिचु। अग्रे चुबक चञ्चू।

अग्रे चूडा चूत चूर्ण पिच्छ पुच्छ गच्छ गुच्छ स्वच्छ तुच्छ। अग्रे छवि जल छत्र छग छद छगल अच्छभल्ल मच्छ इच्छा वाच्छा। अग्रे छात्र छाग छादन। मुञ्ज गुञ्ज अण्डज राज वाज ध्वज भुज खञ्ज बीज अम्बुज व्रज व्याज लाज मुरज करञ्ज नीडज आत्मज उरसिज क्षतज समाज गजराज सरसिज मलयज। अग्रे जल जन जपा अवा जय जगत् जङ्घा जम्बीर जङ्घाल जगति जवन जगर जघन अजगर जवनिका रुजा लज्जा भुजा प्रजा गिरिजा। अग्रे जाहक जानु जार जाति जात जाया जाल जागुड जावाल जागर जालक जातरूप जातमात्र राजि आजि वाजि वनराजि। अग्रे अजित जित जिन राजी। अग्रे जीवन जीव जीरक जीवा ऋजु।

अग्रे ज्वाला झञ्झा। अग्रे झष झम्पा झावुक वात वोत भूत पित्त गीत चूत मत्त गर्त्त धूर्त्त भीत अहित मुक्त कुन्त सुत तात दन्त चित्त प्रीत जात नत द्रुत अश्रान्त आचित एकान्त श्वेत सित पोत सङ्गीत प्रभात अनृत हरित पर्वत राजत कङ्कृत दुर्गत उत्कण्ठित उपवीत लम्बित विधौत पदात सैकत प्रपात निशात निशित शुद्धान्त सामन्त हसित सुरत मणित तापित भरत पारत चेष्टित विभात उचित उन्नत आयत ऐरावत नवनीत प्रक्षालित अपहस्तित अपवारित अनवरत. अग्रे तपतर तनु तनू अन्तर तरी तमी तम तरु तर्क इतर तन्त्र तण्डुल तत्पर तनय आतपत्र तरङ्ग तडाग तमिस्रा तर्णक तरुण तरङ्गिणी तरुषण्ड तरवारि तोरण तेजित तोय मरुत् हरित् शरत् पतत् उपानत् उपविशत् असुहृत् क्षुत् द्विषत् सर्पत् शश्वत् बृहत् संसत् चिता कान्ता लता वासिता देवता वनिता उपमाता।

अग्रे ताल लात ताम्र तापिच्छ ताटङ्क ताम्बूल ताम्रचूड तामरस ताडपत्र कृति श्रुति ज्ञाति पत्ति हेति व्रति यति मति गति जाति रीति क्षिति स्तुति रति पूति नुति नति भ्रान्ति दुर्गति कण्डूति अराति पदाति पक्षति व्रतति श्रान्ति विप्रीति आशापति प्रजापति ध्वाङ्क्षाराति अभिजाति। अग्रे तिल तिमि तिमिर तिरोहित छत्र छात्र मित्र पुत्र पत्र गात्र श्रोत्र यन्त्र नेत्र गोत्र पात्र यत्र अत्र तन्त्र दात्र क्षेत्र अरित्र क्षत्र पवित्र परतन्त्र ताडपत्र आतपत्र। अग्रे त्रस्त अस्त त्रपु त्रपा यात्रा वरत्रा। अग्रे त्रास रात्रि। अग्रे त्रिक त्रिगुण त्रिफला त्रिशङ्कु त्रिदश अमात्य नित्य वात्या चित्या। अग्रे त्याग सत्त्व। अग्रे त्वरी सती अर्वति वासन्ती मालती भारती युवती। अग्रे तीर तीव्र सेतु केतु हेतु क्रतु आगन्तु धातु।

अग्रे तुष तुच्छ तुला ऋतु तुहिन तुवरी तुरग तुरङ्गम तप तूर्ण तूल तुङ्ग तुन्द। नद नाद कन्द छद मद मन्द सूद क्षोद गुद नुद अङ्गद अगद खेद भेद

छेद स्कन्द धनद प्रसाद स्वच्छन्द दोहद कलाद विनोद मकरन्द अरविन्द। अग्रे देव दम दनु दरी दम दल दक्ष दशा दह्र दश दर दया उदक उदधि उदग्र अदभ्र दर्भ दक्षिण नद रद दहन दम्भ दण्ड दण्डि दन्त दोला देह देश देव दास दोष दौवारिक गदा गोदा सदा सर्वदा क्षणदा नर्मदा। अग्रे दानव दारुण दान्त दास दाम दान दासो दार दात्र नन्दि बन्दि आदि सादि मांसादि हीनवादि। अग्रे दिन दिवा दिवस दिति आदि आदित्य आदिम वेदी नन्दी कालिन्दी। अग्रे दोन दीप दीक्षित उदीरण कन्दु विन्दु बिन्दु इन्दु।

अग्रे दुली दुस्थः दुःख दुहिता दुकूल अन्दू। अग्रे दूर दून दूरमणी पाद माद रुद्र मद्र भद्र क्षुद्र शूद्र दद्रु छिद्र सान्द्र हारिद्र दरिद्र वैद्य सद्य। अग्रे द्वार द्युति द्रव्य द्राक्षा द्विषि द्वीपि द्विरद द्रुत द्रोह द्विषत्। बुद्ध युद्ध क्रोध व्याध आयुध अगाध न्यग्रोध समिद्ध अविद्ध अवरोध अपरोध अपविद्ध। अग्रे अन्ध धन धरा ऊधः ऊधस्य अधः धेनु धनुः अन्धः धव धवल अधर धाराधर सन्धा क्षुक्षा मेधा गोधा सुधा अभिधा द्विधा राधा अचिधा। अग्रे धाना धान्य धातु धार आधार उदधि व्याधि आधि अवधि निधि सन्धि विधि। अग्रे अधिप अधिपति अधिभू अधिकृती अधिरोहिणी सुधी। अग्रे धी धीर धीवर अधीश सिन्धु अन्धु सीधु साधु विधु।

अग्रे धुनी धुर्य धुरीण वध। अग्रे धूप धूली धूसर धूमयोनि अध्वरन्ध्र साध्य। अग्रे ध्वान्त ध्वान ध्वाङ्क्ष ध्वनि अध्व अधि अध्यक्ष ध्वाङ्क्षाराति घन धन जिन गान दिन ध्वान वन दान जन पोन हीन दान स्नान यान अञ्जन मोन फेन भुग्न मान उन्न सन्न स्तन अनः धनुः मनः एनः ग्रथन कर्तन कल्पन समान आसन्न पाठीन तुहिन अजिन वामन जीवन मोहन दर्शन रदन आलिङ्गन मण्डन नयन आनन सूदन प्रस्थान वाहन स्यन्दन उपायन स्पर्शन अपान शालीन क्रोधन सज्जन कोपन जनन आसून आसन उल्लोचन आयतन ईशान मदन प्राचीन मञ्जन छदन दशन आलोजन जघन खञ्जन मन्थन बन्धन भवन मीहन अवन ध्वान प्रतिमान नरवाहन वातायन वेत्रासन अध्वनीन अभिवादन सिंहासन व्यापादन आच्छादन सारसन निभालन।

अग्रे नभ नग नर नल नख नक्र नदी नद नत नव नव्य नेत्र नेपथ्य एनः नौ नर्मदा नक्षत्र नखर आनन नगर नरदेव नवनीत अवधान ध्यान धाना अङ्गना मेना वासना देशना यातना रसना प्रार्थना घटना वर्णना पूतना। अग्रे

पीनहीनादिगानमानादयः शब्दा इकारान्ताः क्रियन्ते। नपुंसकलिङ्गे एकत्व-बहुलयोः साम्यं भवति। यथा—अधिकपीनिवनानीवकुलम्। विशदहीनि बिलानीव कुलम्। परमहासमीनिवनानीव समुद्रजलम्। तथा परमखगानि वनानीव विप्रकुलम्। स्वच्छगानि बहुवर्णनागानि पुरोगानि परमध्यानि सुसम्पन्नदानि-परमदानि बहुधानादानि मञ्जुलयानि पीन हीन मीन पाठीन शालोन अध्वनोन ईशान प्रस्थान इत्यादि। वाजादानाभारालाहाक्षा एषां चाकारान्तादिशब्दाना-मग्रे तृतीयैकवचनेन श्लेषः। सदालश्वयान्वितः। सदारुजयान्वितः। पुरोग-दयाऽन्वितः बहुधानयान्वितः। सदादेशनयाऽन्वितः। सदारम्भयान्वितः बहु-धारयान्वितः। स्फुटमहेलयान्वितः।

अथ बाह्याद्यः। बाहाशब्दो भुजवाचो आकारान्तः। सत्वरक्षयान्वित इत्यादि।

**सनकारान्तैः शब्दैः सिसाधितैः पुंस्त्वनिर्युक्तैः।**
**अग्रे क्रियाविशेषणकृतावमुखशब्दतोऽद्भुतं भवति॥ ६॥**

महस्प्रमुखसान्तशब्दैः सद्मन्प्रमुखनान्तशब्दैरग्रस्थक्रियाविशेषणस्थवर-बलवाहिताद्यवमुखपदयुक्तैः पुल्लिङ्गे त्रिभिर्वचनैरद्भुतं भवति। यथा परमहा-वरम्। विलसद्मावाहितप्रसरम्। अस्यार्थो विक्यासूत्रे प्राक्सनान्तप्रस्तावात्स-विस्तरः प्रोक्तः।

**दोर्घादिनान्तशब्दैः स्त्रियां द्वितोयैकवचनकृतरचनैः।**
**अर्थे मिलति च सान्तैः षष्ठीबहुवचनतोऽद्भुतं भवति॥ ७॥**

दीर्घादिनान्तशब्दैः स्त्रियां द्वितीयैकवचनेन साधितैरग्रतः स्थितिं बिभ्र-दित्यादि विभ्राणः षष्ठीबहुत्वेन साम्यादद्भुतं भवति। यथा मृदूनां स्थितिं बिभ्रदित्यादिशब्दास्तथा सकारान्तशब्दैर्व्यञ्जनान्तैरकारान्तैश्च द्वितीयैकत्व-षष्ठीबहुत्वयोः साम्यं यथा—सरसां स्थितिं वहन्, परमहसां स्थितिं बिभ्राणः। तथा श्लेषविशेषणे पुंसि स्त्रियां च व्यञ्जनान्तानां शब्दानामग्रे जस्शस्ङसिङसां साम्यम्।

रेफनिमित्ते उसोरपि साम्यं यथा—गुणभृतोरयात्। जस्शसौ मुक्त्वा क्लोबेऽपि यथा—शुभावाचोरसात्। तथा धृत् भृत् दृद्रूपा ये अकारान्ता व्यञ्जना-न्ताश्च शब्दास्तेषां पुरतः सेरपि साम्यं यथा—गुणभृतो रयात्। आकारान्तपक्षे सिः श्लेषविशेषणे स्त्रियाम्। आकारान्ताद्घोषवति निमत्ते सिजस्शसां पुंस्याका-

रान्तात्जिजस्टानां पुंस्यकारान्ताज्जसः साम्यम्, यथा—सोमपाजगति । पुंपक्षे आकारान्तः अकारान्तोऽपि जस्विषयः । अकारान्तविशेषणात्पुंस्त्रियोर्जसः स्त्रियां शसस्तथा घोषवति निमित्ते स्त्रियां सेरपि साम्यम् । यथा—धृतगुणा जगति । पुंस्यकारान्तादाकारादौ स्वरे सिङ्योः साम्यम् । यथा वृक्ष आस्ते । तथा मृद्भृद्रूपशब्देभ्यः पुंस्याकारान्तातिमङ्योः पुंस्त्रियोर्व्यञ्जनान्ताज्जशस्ङसिङसां क्लीबे ङसिङसाराकारादौ स्वरे साम्यम् । यथा गुणभृत आदरात् । अकारान्तविशेषणात्पुरस्यन्युपसर्गशब्देषु निचितनिभृतरूपेषु पुंसि जसः, स्त्रियां सिजस्शसां, क्लीबे जस्शसोः साम्यं यथा—बहुगुणानिकामम् । अकारान्तविशेषणात्पुंस्यौजसोः, स्त्रियां जस्शसोर्यवलोपस्वरे साम्यम् । यथा—बहुगुणा इह कामम् । हृद्भृद्रूपशब्देभ्यः स्त्रियां सलिङ्गत्रये टावचनस्य साम्यम् । यथा गुणभृता । तथाभूतेयम् । एवंरूपेषु चतुर्थीसप्तम्योरपि । एवमन्येऽपि बहवः प्रकाराः सम्भवन्ति ते स्वयमूह्याः ।

अथेत्यादिश्लेषः । कुरुतामित्यादिष्वेकत्वद्वित्वयोः, अराजन्नमलेष्वेकत्वबहुत्वयोः, व्यतिभाते इत्यादिष्वेकत्वद्वित्वबहुत्वानां साम्यम् ।

अथ स्वराणां मिथः श्लेषोपायमाह—

पूर्वमकारस्यान्यस्वरैः क्रमेण श्लेषो, यथा—

**ओसि आमि जसि भ्यामि स्वरे गौणतया अ आ ।**

ये शब्दा अकारान्ता आकारान्ताश्च पृथगर्थास्ते औस्यादिभिः श्लिष्टाः स्युः । यथा रामयाः रामाणाम् रामा. रामाभ्याम् [1]रामावगूहनम् रामाश्लेषः रामेच्छा रामेप्सा रामोद्योतः रामोढा रामैजनम् रामैहिकः रामौजः रामौरसः रामाञ्जनम् रामेङ्गितम् । उल्लासितरामो लक्ष्मण इव वसन्तः । अत्र समासेन गौणता । शब्दा यथा । राम लक्ष्मण पद्म कमल बाल शाल आधान कल कच्छ तारक अलक मालिक जालिक जप जय मुक्त कान्त प्रिय सित दक्षिण दोष अञ्जन सून वासन रसन प्रवाल प्रकार प्रमद प्रवीण प्रसभ शिव जीव वत्स धर गोत्र रस दूल क्षम अनन्त धिषण परवश आर्द्र बहुल तार कील सदारम्भ काष्ठ विनत निकष ग्रह करण घट कक्ष उच्छृङ्खल हाल विदेह आर निर्वीर विधव निष्कल श्रवणादयः ।

**अइस्यग्रस्थरेफेण इनाग्रगसमासतः—**

अकारेकारौ सप्तम्येकवचनपुरःस्थरेफादिशब्देन, तथा इनपुरःस्थसमासेन, तथा च्विप्रत्ययेन श्लिष्टौ भवतः । यथा सुबुद्धेरचितस्थितिः । अकारान्तपक्षे

१. रामाय गूहनमिति पाठान्तरम् ।

सप्तमी, इकारान्तपक्षे पञ्चमी षष्ठी वा। शुद्धबुद्धिशोभितः। अकारान्तपक्षे शुद्धश्चासौ बुद्धश्च शुद्धबुद्धोऽस्यास्ति इति इन्। इन्ननेकस्वरादयः। "सर्वादेर्नित्यमिन् द्वन्द्वनिन्दितरोगेभ्य" इत्यादिना इन्प्राप्तिर्ज्ञेया। यथा—शुद्धबुद्धीभूतश्रीः। शब्दाः, यथा—शुद्ध सिद्ध प्रयत निचय मत वल्ल मल्ल रत सुगत जात कान्त नत प्रस्तुत शान्त उन्नत आयत दुर्गत सुरत नवनीत अवध कृत ज्ञात अवन अटन निनद प्रकृत अभिजात हर अर अशन भूत चल बल ग्रन्थ प्रबोध अनेक पक्षतः आट सदा पद्धत काश सूर दुर्विध दीप्त रिष्ट गुरुतर वार कर कट शाल मुष्ट श्रुत वर्द्धक इत्यादयः।

## अई च्विप्रत्ययाद् गौणौ ॥ ८ ॥

अकारेकारौ च्विप्रत्ययेन गौणौ श्लिष्टौ भवतः। यथा महीकृतश्रीः। गौरीभूतस्थितिः। अकारान्तपक्षे पञ्चमी षष्ठी वा च्विः। शब्दा यथा—मह गौरव रसा रवि पञ्च वल्लक सल्लक पांशुल वल्ल मल्ल दर गुरुतम वसुतम तन्त्र नन्द वेद वाप सरस अवन बहुतर काल ताल हरिताल कवल ओष्ठ बिम्ब मागध माधव कर्कट करीर अर्जुन कुट कुम्भ वर्द्धन भारतर चार सन्नगर नील बाण चण्डाभ सदानिभ ऐरावत शृङ्ग निष्कुट शम कुश कर्कर मन्थन सदा सम्मुख कुण्ड तुण्ड परतन्त्र सुमुखकूबर सदामल्लधोरण वैजयन्त तीर एकाबल असुर आढक सदातुवर पिप्पलेत्यादयः।

## रेफदृष्टसिना अउ—

अकारोकारौ प्रथमैकवचनाग्रस्थरेफादिशब्दैः श्लिष्टौ भवतः। यथा—वटोरम्यः उकारान्तपक्षे पञ्चमी षष्ठी वा। शब्दा यथा—पट कट रङ्क काक सशङ्क वर चार केत कन्द उत्त्रप दार तर्क वाह शुम्भ मय बह भर सदा उडु गोमया भूरिमाय उत सदाकार सक्त पर मद्य स्तन प्रभ जराय अवट अन्ध तालेत्यादयः।

## अऊ उवत् कृतक्लीबविशेषणतया तु ऊ।

यथा अकारान्ता उकारान्तास्तथा ऊकारान्ताः पूर्वं क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते। तत उकारविधिना श्लेषः। यथा अतिवधोरम्यतरः प्रकारः। क्रूरान्तरारिषु स्वसमानी मुनिमण्डलस्य। ऊकारान्तपक्षे अतिक्रान्ता वधूर्येन मुनिमण्डलेन तदतिवधु, तस्यातिवधोः। शब्दा यथा—आगभ आलाव यवाग परमन्द अधिभ प्रतिभ पुनर्भेत्यादयः।

## अए डौ—

अकारैकारौ सप्तम्येकवचनेन श्लिष्टौ भवतः। एकारान्तशब्दानामबाहुल्यादकारसहितपूर्वाक्षरशब्दा अर्थे मिलति ग्राह्याः। यथा अधिकेवलसंस्थितिः। परहेरम्बसल्लक्ष्मीः। अकारान्तपक्षे सप्तमी शब्दाः, यथा—भेक केवली केलि केतु केश केदार केसर क्रमेलकादयः।

## दृष्टरेफेण भिसा गौणतया अए ॥ ९ ॥

अकारैकारौ तृतीयाबहुवचनेन पुरःस्थसमासरेफादिशब्दैः श्लिष्टौ भवतः। यथा सदासन्नरैरम्यः। ऐकारान्तानामप्यबाहुल्यादैकारसहितपूर्वाक्षराणामैकाराग्रस्थरेफाणां शब्दानामर्थे मिलति ग्रहणम्। यथा कैरवभैरवादयः। सिदृष्टघोषवदाद्यैर्न सन्धिः। संहिताया अभावेन विरामविवक्षणाद्विसर्ग एव।

## अऊ—

अकारोकारौ प्रथमैकवचनाग्रस्थघोषवत्पूर्वाक्षरवर्यादिशब्दैः श्लिष्टौ भवतः। यथा—नगोवर्यश्रीः। अकारान्तपक्षे सिः। उकारान्तानामप्यबाहुल्यादोकारसहितपूर्वाक्षराणाम् उकाराग्रे अकारघोषवद्भ्यां युक्तानां शब्दानां ग्रहणम्। यथा कोरक गोलक चोलक नयोधस्थितिरित्यादौ उकाराग्रे अकारः। कोयष्टिः कोदण्डः कोद्रवः उच्चक्रोधवत्स्थितिः कोलसल्लक्ष्मीः पोगण्ड गोधन इत्यादौ उकाराग्रे घोषवन्तः पुरोद्योतः। अधिकोपगतः इत्यादौ नसिः। पक्षद्वयेऽपि समास उद्योताद्यैः।

## उलीलया अउ—

अकारान्ता उकारान्ता यदा तदा पूर्वं क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते तत उविधिना श्लेषः। यथा अत्यासन्नोरुचिरः। स्वतुल्यः कुलस्योदयः। पक्षे अतिक्रान्ता आ सामस्त्येन सन्नोर्येन कुलेन तत् अत्यासन्नु, तस्य अत्यासन्नोः। एवं द्योः। एवमन्येऽपि।

## गौणत्वे आ अवत्।

आकारान्ताः शब्दाः पूर्वमन्यविशेषणत्वेनाकारान्ताः क्रियन्ते पश्चादकारविधिना सर्वस्वरैः श्लेषः। इकारेण यथा—पुरे प्रचुरशाले रम्यता शरत्केदारस्येव। शालापक्षे सप्तमी। शालिपक्षे पञ्चमी षष्ठी वा। शब्दा यथा—शाला सन्धा विनता प्रहेला हेला बहुलाला परमहाला महाशीला मुक्ता कान्ता कलेत्यादयः।

इकारेण, यथा—घटा बहुलाला महाशाला[1] परमहाला सुरुचिज्वाला ( महाशाला ) इत्यादयः। बहुलालीभूतः। उकारेण, यथा—मन्या सूना कम्बा वला त्रपा अम्बा मृगयादयः। धृतत्रपोरम्यः। अकारेण, यथा—भा प्रतिभा अधिभा पुनर्भा कच्छादयः। अतिभोरम्यः प्रचारः। स्ववृत्त्यधिकवृन्दस्य।

**च्विना आमि ङसि स्वरे इई।**

इकारेकारौ च्विप्रत्ययेन तथा आम्उस्भ्यां तथा स्वरैश्च श्लिष्टौ भवतः। यथा—सदाबलीभूतः। सदावलीनां सदा वल्ल्योः सदावल्ल्यनुगतादयः। शब्दा यथा—अवि महाशालि अधिकालि प्रचुरालि नन्दि आलि मल्लिवलीत्यादयः।

**इउ ङौ**

इकारोकारौ सप्तम्येकवचनेन श्लिष्टौ भवतः। यथा विधौ प्रीतिः। शब्दाः, यथा—अणिहेति कटितरि सदारि शरारि उच्चारि सदाद्रिप्रभृतयः।

**क्लीववृत्तित्वे इऊ उविधिना तथा ॥ १० ॥**

इकारोकारौ यदा क्लीबे तदा ऊकारान्ताः क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते तदा उविधिना श्लेषः। द्वेधापि विशदवधो कुले।

**इए ङसिङसौ रेफे।**

इकारैकारौ पञ्चमीषष्ठेयकवचनेन पुरस्थरेफादिरम्यप्रमुखशब्देन श्लिष्टौ भवतः। यथा सदसिरम्यः। एकारान्तशब्दानामभावात्से शब्दः कल्पितः। इना सह वर्तत इति सेः, सकाम इत्यर्थः। सदासेरभसाटोपः।

**ङौ यवलोपि स्वरे इए।**

इकारैकारौ सप्तम्येकवचनेन यवलोपि स्वरे श्लिष्टौ भवतः। यथा सदारा आटोपः अरिरैः।

**सम्बोधनसियोगेन यवलोपि स्वरे इऊ।**

इकारोकारौ सम्बोधनप्रथमैकवचनेन यवलोपि स्वरे श्लिष्टौ भवतः। यथा—कट इह कटि कटु।

1. महाशाला इति परिवर्तितः पाठः।

**इअङौ ।**

इकारौकारौ सप्तम्येकवचनेन यवलोपि स्वरे श्लिष्टौ भवतः। यथा—सदाशनैरेतः।

**क्लीबवृत्तित्वे ई इवत् ।**

ईकारान्ताः क्लीबविशेषणत्वेन इकारान्ताः क्रियन्ते तत इवत्सर्वस्वरैः श्लेषः। इकारौकारेण यथा—स्वीकृतपटौ मित्रे प्रीताः। शब्दाः, यथा—अतनी अपटी कटी वटी सदावटी तरी चरी करी चारी वारी दारी। उकारेण तनी तनूभी भूप्रभृतयः।

**तद्धिया उऊ ।**

तस्य ईकारस्य धीस्तद्धीस्तया ऊकारान्ताः क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते तत उविधिना सर्वस्वरैः श्लेषः। उकारान्तोकारान्तौ च्विप्रत्ययेन वा श्लिष्टौ। तनुतनूकण्डुकण्डूप्रभृतयः।

**अम्प्रयोगादनुस्वारः ।**

द्वितीयैकवचनेनाऽनुस्वारश्लेषो यथा—अधिकम्बलं वहन् रुचिराङ्गणश्रियं बिभ्रत् पुरो गाङ्गेयश्रियं[1] दधत्।

**विसर्गश्रीसमैः पुरः ॥ ११ ॥**

श्रीस्थितिप्रायैः पदैः पुरःस्थैर्विसर्गश्लेषो यथा—परागश्रीमहस्स्थितिः। स्यादित्यादिविभक्तिश्लेषो, भाषा श्लेषः प्रकृतिश्लेषोऽपि भङ्गश्लेषोपायेन साध्यः। विभक्तिश्लेषो यथा—भवतिपक्षे भवति रोहितः। पक्षे भवेन तिरोहितः। स्यादिपक्षे विभक्तीनामलोपः समासेन लोपो वा क्रियते। भवतः। स्यादिपक्षे तवशिवतो वा। एवं सर्वत्र ज्ञेयम्। भवन्तिरोहिताः। भवसिततश्रीः। भवामिततश्रीः। भवावस्थित्या। राजतिरोहितेत्यादयः। भाषाश्लेषादयः, यथा—किम्पि केवलं पुरवञ्चन कलियाना नाधो कधम् अर्थैक्येन भाषाश्लेषे समसंस्कृतप्राकृतादिशब्दाः प्राकृतलक्षणेन ज्ञेयाः। यथा सुरभवहरिणनरकुले त्यादयः। प्रकृतिश्लेषः महःस्थित्यादयः। एवमष्टविधोऽपि श्लेषः प्रपञ्चितः।

श्लेषभेदो यथा—

---

१. रुचिमिति पाठान्तरम्।

**वर्णभाषालिङ्गपदप्रकृतिप्रत्ययैस्तथा ।**
**विभक्तिवचनाभ्यां च श्लेषः सञ्जायतेऽष्टधा ॥ १२ ॥**

**कल्पवर्योऽत्र भङ्गोऽभूदाकारेकारवर्णयोः ।**
**स्वर्गलाभविभाशोभी पदभङ्गसमुद्भवः ॥ १३ ॥**

**लिङ्गश्लेषे तनुर्नेत्रे बाह्याः कैरवराजिनी ।**
**हरउमे सुरमणो संस्कृतप्राकृतोद्भवः ॥ १४ ॥**

**दारिद्र्यचक्रद्विपौ मित्रे कृकृत्प्रकृतिभङ्गतः ।**
**गौरीभूतगुणोपेत ई च्विप्रत्ययभङ्गभूः ॥ १५ ॥**

**त्वमत्रारचयश्चक्रेत्यादिस्याविविभक्तिजः ।**
**विलसद्मान इत्यत्र बह्वेकवचनोद्भवः ॥ १६ ॥**

**वर्णादीनामभङ्गे तु राजा मृदुकरस्थितिः ।**
**संसारसारमर्थेक्ये संस्कृतप्राकृतोद्भवः ॥ १७**

यमकोपायमाह—

**समानस्वरवर्णानुप्रासतः श्लेषतस्तथा ।**
**स्याद्वर्णपदपादानामावृत्त्या यमकं द्रुतम् ॥ १८ ॥**

अनुप्रासश्लेषोपायाः पूर्वोक्ता एव । हेलाविडम्बितहिरण्मयरत्नशृङ्गाः शृङ्गारभासुररुचः सहचारिकान्ताः । कान्तारभूवसतयोऽत्र चरन्ति सारं सारङ्गचञ्चलदृशो मरुतां महेलाः ।

भवविवृद्धिकृते कमलागमो जिनमतो नमतो नमतो मम ।
न रतिदाऽमरभूरुहकामधुक् सुरमणीरमणीरमणीयता ॥ १२ ॥

वनस्यान्तर्लसत्यत्र रतिभूतरुचारुणः ।
सुरौघः स्त्रीसखोरत्नै रतिभूतरुचारुणः ॥ १३ ॥

वक्रोक्तिविरोधाभासप्रश्नोत्तरपुनरुक्ताभासा अपि श्लेषसाध्याः । यथा—

तरणिं पश्य सुश्रोणि नाथ कुत्रास्ति नौरिह ।
सवितारं प्रिये वच्मि प्रिय दूरेऽधुना पिता ॥ १४ ॥

भात्येष मेरुरुचिरोऽपि नमेरुशोभी
कृत्स्नामिलामपि वहन्नलिनाभिरामः ।
सव्यालवालमपि चन्दनपादपानां
नव्यालवालमभितो वहते समूहम् ॥ १५ ॥

मूर्ध्ना वहन्ति के कुम्भौ मुग्धा श्लिष्टा ब्रवीति किम् ।
क्रियते कुञ्जरास्यस्य किमु सम्बोधनं बुधैः ॥ १६ ॥

गजाननः ।

प्रद्योतनोऽम्बुजानां सवितामहसां विकर्तनस्तमसाम् ।
निखिलजगच्चक्षुरसावम्बररत्नं रविर्जयति ॥ १७ ॥

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां
काव्यकल्पलतावृत्तौ श्लेषसिद्धिप्रताने तृतीयेऽ-
द्भुतस्तबकश्चतुर्थः ॥ ४ ॥

## अथ तृतीयप्रताने पञ्चमः स्तबकः

अथ चित्रप्रपञ्चः ।

**स्यात्स्वरव्यञ्जनस्थानगत्याकारनियन्त्रणा ।**
**च्युतगूढादि वा चित्रं च्युतं तत्र चतुर्विधम् ॥ १ ॥**

**मात्रार्धमात्रयोर्बिन्दुवर्णयोश्च्युतनात्मनम् ।**
**क्रियाकारकसम्बन्धपादैर्गूढं चतुर्विधम् ॥ २ ॥**

स्वरादीनां नियन्त्रणानियमः **स्वरचित्रम्**, यथा ।

जय सकलनयकलन जय मदनमददलन ।
जय कमलकरचरण जय सभयजनशरण ॥ १ ॥

ह्रस्वैकस्वरम् । एवं दीर्घैकस्वरद्वित्र्यादिस्वरनियमो ज्ञेयः । एकस्वरादि-
शब्दाः सुप्राप्या इति न दर्शिताः ।

व्यञ्जनचित्रम्, यथा—

ककाकङ्ककाङ्काङ्का केकिकेकाकुका ककुप् ।
कौ कङ्कङ्ककोकैं ककाकङ्काककाकुकम् ॥ २ ॥

वर्षावर्णने ककुप् वर्तते । जात्येकवचनम् । किंभूता । ककाकङ्ककाङ्काङ्का । कका लोलाः काकङ्काङ्का सुखागमना ये काङ्का मेघास्ते अङ्को लक्ष्म यस्याः सा । कक लौल्ये । भ्वादिरात्मनेपदी । ककन्ते ककाः, पचाद्यच् कं सुखं तद्धेतुः आकङ्क आगमनं येषां ते काकङ्काः । ककिवकीत्यादिना भ्वादिरात्मनेपदी ककधाधुः आङ् पूर्वः । आकङ्कनं आकङ्कः । भावे घञ् । कं जलं अङ्के उत्सङ्गे येषां ते काङ्का जलभृतः । पुनः किम्भूताः । केकिकेकाकुकाः । केकिनो मयूरा स्तेषां केका ध्वनिविशेषास्तासां कुका ग्राहिणी । कुक, वृक, आदाने । भ्वादिरात्मनेपदी ।

कोकते कुका । नाम्युपधात्कः । कौ ककङ्ककाकैंककाकं, तथा कौ पृथिव्यां कं जलं वर्तते किंभूतम् । कङ्ककोकैंककाकम् । कङ्काश्च कोकाश्च तेषामेकोऽद्वितीयः काको रवो यत्र तत्कङ्का पक्षिविशेषाः । स्वार्थे कः । कोकाश्चक्रवाकाः, कायति अर्थमभिधत्त इति काकः शब्दः "इग्भीपाकाश्रुत्वर्चिकृदाधारिभ्यः कः" । पुनः किंभूतम् । काककाकुकम् । काककञ्च काकुकञ्च तत्केन आत्मना आककं कुटिलगामि । अक, अग, कुटिलायाङ्गतौ भ्वादिः परस्मैपदी । अकतीति आककम् । ण्वुल् । काकुर्ध्वनिविशेषस्तङ्करोति । अन्यतोऽपि चेति डः ।

अथैकाक्षरादिशब्दाः कादि क्रमेण लिख्यन्ते । यथा । कु ककुप् काकु ककि केका कः एकाकी किं कः कौ के कान् क का के काः काम् के काः किं के किम् के । अकं, पापादौ । काक, ङ्काकसमूहादौ । को, ब्रह्मादौ । कं, शीर्षादौ । काका, काकजङ्घादौ । अङ्को, भूषणादौ । एकः, सङ्ख्यादौ । कङ्को, यमादौ । काको, द्विजादौ । कोकः, चक्रादौ । ककुद, राजचिह्नादौ । खमिन्द्रियादौ । खोऽर्कः । आखुर्मूषकः । गं, गन्धर्वादौ । गं, गीते । गौः, स्वर्गादौ । अगो, वृक्षादौ । अङ्गं, शरीरादौ । इङ्गं, इङ्गितादौ । आगो, मन्त्रादौ । आगूः, प्रतिज्ञायाम् । गङ्गा गौः गां अगः । घ, घण्टीशे । घः, किङ्किण्यादौ । अघम्, दुःखादौ । ओघः, प्रवाहादौ ।

चश्चन्द्रादौ । चञ्चु, स्त्रोटयादौ । चञ्चूः चञ्चुवत् । चञ्चुप्रत्ययश्चित् उक्ष । चोचं, वल्कलम् । जो, जैत्रादौ । जुर्नभोवागादौ । अजो, ब्रह्मादौ । आजिर्युद्धादौ । ओजो, बलादौ । अजाः, आजूः टो, खेटं पृथिव्याम् । अट्टो,

हट्टादौ। आटिः अट आटत् आटीत् । डः, शिवादौ। इडा, बुधाङ्गनादौ। ईड, स्तुतौ । णो, निष्फलादौ । ईडा, अणिरिवाक्षाग्रकोलादौ । अणुर्व्रीह्यादौ। ऐण स्तस्करादौ। ता, श्रीः। अन्तः, प्रान्तादौ। ईतोः, रजन्यादौ। ऊतिः, रक्षादौ । एतः, आगमादौ। ततं वीणादिवाद्ये । ततो, व्याप्तादौ । तातः, पित्रादौ। तृट्, पिपासादौ। तन्तु तुक् अपत्यं आतिः। तन्तुः, जलजीवविशेषे। अन्तर उतः, प्रोते। ऊतः, स्यूते। तच्छशब्दः। तौ तम् तौ ते तान् तैः ते ताः ताम् ते ताः तत् ते। उतु अति अतः एतिः ततिः तान्तः इति।

एतौ एते एतम् एतौ एतान् एतैः एते एताः एताम् एते एताः एतत् एते उत्। घः, शलादौ। अथ अथो । दं, पत्न्धाम् । दा, दानादौ, दृग्, नेत्रादौ। अन्दूर्निगडादौ । दिश् इन्दुः, वसुदेवे। दौः, आदिः। इदं अदः अदात् ददे ददौ। घा, धनदादौ । धुर्भारादौ, अन्धोऽक्षिहीनादौ । आधिर्मनःपीडादौ। अन्धस् धीः ऊधः अन्धु एधस् एध । धुर, यानमुखादौ । अधः अधिधिक्। नी, बन्धादौ। निर्नेता, नु, स्तुत्याम्। नौस्तर्याम् । अन्नं, भक्तादौ । इनः, स्वाम्यादौ। उन्नः, क्लिन्नादौ। ना नो आनन अन्नः नुन्न नाना ननु न नो नूनम् अनु ऊनः एनम् एनाम् अनेन एनः। पः, पवनादौ। पूः, पुरादौ। पूपः अपूपः आपं पापं पपो रविः अपि अप पम्पा। उषा, आपत् आपि। उषा, नीशीथे।

वी, वरुणादौ । विः, पक्ष्यादौ । बिम्बं, प्रतिबिम्बादौ । अम्बा अम्बु बिम्बी । बबयोरैक्यमिति वोऽप्यत्र। वः शिवादौ। अविर्मेषादौ। वाग्वचनादौ। विदार अव एव इव वा वै आवाम् व विश् अवाक् वित् आविः विः। भः शुक्रादौ। भास् कान्त्यादौ। भं भा भूः भूस् भोः भं भा भीः उभा आभा अभि भुक् इभ भित् भाक् भो भिः आभिः एभिः अभात् अभामः शिवादौ । मा लक्ष्म्यादौ । मास् मासादौ । मूर्बन्धने । आमोऽपक्वादौ। उमा गौर्यादौ। मुत् हर्षादौ। इमौ इमे इमम्, इमौ इमाम्, इमे इमाः अमू अमो अमुम् अमून् अमूः । अमा, सहार्थे। मा, वारणार्थे। मां मे मम अमात् । यो मारुतादौ।

यं पशौ । या यानादौ। ययुर्वाहादौ। युध अयस् आयुः अये अयम् अयि आयाः यः यौ ये यम् यौ यान् यैः ययोः। या ये याः याम् ये याः यया यत् ये अयात् अयाम् ययौ ययुः इयाय ईयुः। रः, स्मरादौ। री, भ्रान्तौ। रुः, सूर्यादौ। रैः धनादौ। अरोऽष्टादशो जिनः। अरम्, चक्राङ्गादौ। आरो, भौमादौ। आरा, चर्मभेदिनी। इरो, जलादौ।

रुरुर्दैत्यादौ । रुक्, शोभादौ । अरर अररिः, द्वौ कपाटे । रिरी रीरी, द्वौ आरकूटे । रुज् रीर उरु अरुः ईर उर उरस् रुष राज् अरि अर अरे रे आरत् आरात् अराः ररौ रुरुः ररे आर आरुः ।

ल, इन्द्रादौ । लुलावे, ली, श्लेषादौ । अलिर्भृङ्गादौ । आलिः, श्रेण्यादौ । आलुः, कन्दादौ । इला भूम्यादौ । लीला, विलासादौ । लोलश्चलादौ । लोला जिह्वादौ । ईली शस्त्री उलल्लः आलुः करपत्रिका । अलम्, हरिताले, निरर्थे च । लाला अलिन् अल वृश्चिकपुच्छदण्डिका लुलत् ललत् एला अण्डल आलप्रत्ययौ एड आली लाली एल अलात् अलु ललौ ललुः लले डलयोरैक्यमिति डोऽप्यत्र ज्ञेयः ।

शं शुभे । शा साम्नायाम् । शी शयने । शुर्विधौ । अंशः किरणादौ । आशा, दिगादौ । आशुर्व्रीह्यादौ । ईशः शिवादौ । शशः शशी अंशः । आशीः, मङ्गलवागादौ । शुक् शिशुः । ईशा हलदण्डे । आशु । षः श्रेष्ठे । षू गर्भविमोक्षे । उषा निशादौ । उषः सन्ध्यादौ । ईषा । सः परोक्षे । सा लक्ष्म्याम् । सत् अंस असृज् सीसं सत् असु असिः सः सां असौ आसन् आसीत् आसे । हो हस्तादौ । अहिः सर्पादौ । ईहा स्पृहादौ । अहः हाहा हूहू ऊह हृद् अंह इह हे है अहो हं हो हो अहह ह हाहा आह आहुः । एवमन्येऽप्यूह्याः ।

अः कृष्ण आ स्वयम्भूरिः काम ई श्रीहरीश्वरः ।
ऊ रक्षणे ऋऋ ज्ञेयो देवदानवमातरौ ॥ ३ ॥

ऌर्देवसूलॄर्वाराही भवेदेर्विष्णुरैः शिवः ।
त्रैर्वेधा अरनन्तः स्यादुं ब्रह्म परमः शिवः ॥ ४ ॥

को ब्रह्मात्मप्रकाशार्ककेकिवायुयमाग्निषु ।
कं शीर्षेऽप्सु सुखे कुस्तु भूमौ शब्दे च किं पुनः ॥ ५ ॥

स्यात् क्षेपनिन्दयोः प्रश्ने वितर्के च खमिन्द्रिये ।
स्वर्गे व्योम्नि नृपे शून्ये सुखे संविदि खो रवौ ॥ ६ ॥

गस्तु गातरि गन्धर्वे गं गीते गौर्विनायके ।
स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौ गिरि ॥ ७ ॥

जलेऽक्षि वस्तु घण्टीशे घा किङ्किण्यां वधे ध्वनौ ।
ङस्तु भैरवविषयेच्छयोश्च चन्द्रचौरयोः ॥ ८ ॥

छः सूर्ये छेदके छन्तु निर्मले जस्तु जेतरि ।
विगते जूर्नभोवाचि पिशाच्यां जवनेऽपि च ॥ ९ ॥

को नष्टे गायने चारुवचने घर्घरध्वनौ ।
टं पृथिव्यां करङ्के च टो ध्वनौ टो महेश्वरे ॥ १० ॥

शून्ये बृहड्घनौ चन्द्रमण्डले डं शिवे ध्वनौ ।
जापे ढा निर्गुणे शब्दे ढक्कायां णस्तु निष्फले ॥ ११ ॥

ज्ञाते तस्तस्करक्रोडपुच्छयोस्ता पुनः श्रियाम् ।
थो भीत्राणे महीध्रे दं पत्न्यां दा दातृदानयोः ॥ १२ ॥

छेदे बन्धे च धा गुह्यकेशे धातरि धर्मतौ ।
धूर्भारकम्पचिन्तासु नः पुनर्बन्धबुद्धयोः ॥ १३ ॥

निस्तु नेतरि नुस्तुत्यां नौस्तर्यां पस्तु पातरि ।
पवने जलपाने च फो झञ्झानिलफेनयोः ॥ १४ ॥

फुस्तु फूत्कारे निष्फलभाषणे वः प्रचेतसि ।
कलशे विः खाण्डजयोर्भमुडौ भोऽलिशुक्रयोः ॥ १५ ॥

भा कान्तौ भूर्भुवि स्थाने भीर्भये मः शिवे विधौ ।
चन्द्रे शिरसि मा माने श्रीमात्रोर्वारुणेऽव्ययम् ॥ १६ ॥

मूः पुनर्बन्धने यस्तु मातरिश्वनि यं पशौ ।
यस्तु यातरि खट्वाङ्गे याने लक्ष्म्यां च रो ध्वनौ ॥ १७ ॥

तीक्ष्णे वैश्वानरे कामे राः स्वर्णे जलदे घने ।
रोर्भ्रमे रुर्भये सूर्ये ल इन्द्रे चलनेऽपि च ॥ १८ ॥

लू लवे ली पुनः श्लेषे वलये वो महेश्वरे ।
वरुणे मारुते वः स्यादौपम्ये पुनरव्ययम् ॥ १९ ॥

शं शुभे शा शास्नायां शीः शयने शुर्निशाकरे ।
षः श्रेष्ठे षूः पुनर्गर्भविमोक्षे सः परोक्षके ॥ २० ॥

सा लक्ष्म्यां हो निपाते च हस्ते दारुणि शूलिनि ।
क्षः क्षेत्रे रक्षसोत्युक्ता माला प्राक्सूरिसम्मता ॥ २१ ॥

नाम्नामेकार्थनानार्थैकाक्षराणामियं मया ।
रुक् शोभाकिरणेच्छासु वाग् भारत्यां वचस्यपि[1] ॥ २२ ॥

---

1. वचस्पतिरित्यपपाठः प्रतिभाति ।

सद्विद्यमाने सत्ये च प्रशस्तार्चितसाधुषु ।
ककुद्भूपतिचिह्ने स्यात्प्रधाने वृषभाङ्गयोः ॥ २३ ॥

धूर्यानवदने भारे पूः शरीरे पुरे तथा ।
दृग्द्रष्टृदर्शनेऽप्यक्षिण विट् प्रवेशे नृवैश्ययोः ॥ २४ ॥

तृड्लिप्सायां पिपासायां भा प्रभावे महस्यपि ।
भास्तु मासे विधौ चैते युक्पादान्तोपयोगिनः ॥ २५ ॥

अकन्दुःखाद्ययोरङ्को भूषारूपकलक्ष्मसु ।
चित्रादौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागमे ॥ २६ ॥

एकोऽन्यः केवलः श्रेष्ठः संख्या च परिकीर्त्यते ।
कङ्को यमे लोहपृष्ठे तथा ब्राह्मणलिङ्गिनि ॥ २७ ॥

काकः पीठसर्पिणि स्याच्छिरोवक्षालने द्विके ।
द्वीपमानद्रुभेदेषु काकं काककदम्बके ॥ २८ ॥

योषितां रतबन्धे च काका तु काकजङ्घिकाः ।
काकोदुम्बरिका काकमाचिका रक्तिका तथा ॥ २९ ॥

काकोली काकनाशोऽथ कोकश्चक्रे वृकेऽपि च ।
खर्जूरी पादपे भेके स्यादगस्तु महीरुहे ॥ ३० ॥

शैले सरीसृपे भानावङ्गमन्तिकगात्रयोः ।
उपसर्जनभूते स्यादस्युपायप्रतीकयोः ॥ ३१ ॥

अङ्गानि वृद्धिशेषे स्युरिङ्गः स्यादिङ्गितेऽद्भुते ।
ज्ञानजङ्गमयोश्चाघं दुःखे व्यसनपापयोः ॥ ३२ ॥

ओघः प्रवाहः सङ्घातोऽद्रुतवृत्तपरम्परा ।
उपदेशश्च चञ्चुस्तु त्रोटयां पञ्चाङ्गुले तथा ॥ ३३ ॥

अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे ।
आजिः क्षणे समक्ष्मायां युध्यट्टोऽट्टालके भृशे ॥ ३४ ॥

चतुष्कभक्तयोर्हट्टे इडेले च बुधस्त्रियाम् ।
गोवाक्स्वर्भूमिनाडीषु तथा स्यादणिराणिवत् ॥ ३५ ॥

अक्षाऽग्रकीलेऽश्रौ सीमन्यणुर्व्रीह्यल्पयोः पुनः ।
अन्तः प्रान्ते च पार्श्वे च स्वरूपे निश्चये तथा ॥ ३६ ॥

नाशावयवयोः स्यादीतिरजन्यप्रवासयोः ।
स्यादूतिः स्यूतौ रक्षायामेतः कर्बुर आगते ॥ ३७ ॥

ततं वीणादिवाद्ये स्यात्ततो व्याप्तेऽनिले पृथौ ।
तातोऽनुकम्प्ये जनकेऽन्दूः स्यान्निगडभूषयोः ।
अन्धोऽन्धकारेऽक्षिहीने स्यादाधिर्बन्धकाशयोः ॥ ३८॥

मनोर्तौ व्यसनेऽधिष्ठानेऽन्नं त्वसितभक्तयोः ।
इनः स्वामिनि सूर्ये स्यादुन्नं क्लिन्ने दयापरे ॥ ३९ ॥

बिम्बन्तु प्रतिबिम्बे स्यान्मण्डले बिम्बकाफले ।
आमोऽपक्वे रोगभेदरागयोः स्यादुमा पुनः ॥ ४० ॥

शिवपत्न्यां हरिद्रायां कीर्तिकान्त्यतसीष्वपि ।
ययुर्यज्ञहये वाहे स्यादरोष्टादशार्हति ॥ ४१ ॥

भवत्यरन्तु चक्राङ्गे शीघ्रशीघ्रगयोरपि ।
आरो रीरी शनिर्भौमे आरा चर्मप्रभेदिनी ॥ ४२ ॥

इराऽम्भोवाक्सुराभूषु रुरुर्दैत्यकुरङ्गयोः ।
अलिः सुरापुष्पलिहोरालन्तु हरितालके ॥ ४३ ॥

तथा निरर्थके ज्ञेयमालिस्तु विशदाशये ।
अनर्थे सख्यामावल्ल्यां सेनावालुर्गलन्तिकाः ॥ ४४ ॥

आलुः कन्दे भेलुकेऽपि लोर्थी गौर्वाक् बुधाङ्गना ।
लीला केलिर्विलासश्च शृङ्गारभावजक्रिया ॥ ४५ ॥

लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः ।
अविर्मेषे रवौ भूमिधरे मूषककम्बले ॥ ४६

अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ ।
आशा ककुभि तृष्णायामाशुस्तु व्रीहिशीघ्रयोः ॥ ४७ ॥

ईशः स्वामिनि रुद्रे च स्यादीषा हलदण्डके ।
उषा स्याद्बाणदैत्येन्द्रनन्दिन्यां रजनावपि ॥ ४८ ॥

आगः स्यादेनोवदधे मन्तावाशीर्हितैषणे ।
उरगस्य च दंष्ट्रायामुषः सन्ध्याप्रभातयोः ॥ ४९ ॥

उरो वक्षसि मुख्ये स्यादोजो दीप्तिप्रकाशयोः ।
अवष्टम्भे बले धातुतेजस्योकस्तु सद्मनि ॥ ५० ॥

उकारस्त्वाश्रममात्रेऽहिर्भुजङ्गे वृत्रवप्रयोः ।
ईहोद्यमस्पृहेत्येते द्विस्वरैकाक्षरा मताः ॥ ५१ ॥

अथाऽव्ययानि कथ्यन्ते प्राग्वदेव स्वरक्रमात् ।
अः स्वार्थेऽप्यस्वभावेऽपि स्यादा स्मरणवाक्ययोः ॥ ५२ ॥

आङीषदर्थेऽभिव्याप्तौ क्रियायोगेऽवधावपि ।
आ स्यादवधृतिस्मृत्योराः सन्तापप्रकोपयोः ॥ ५३ ॥

इः स्यात् खेदे प्रकोपोक्तावी क्रोधे दुःखभावने ।
प्रत्यक्षे सन्निधौ चापरुषोक्त्यामन्त्रणार्थयोः ॥ ५४ ॥

उः प्राधान्ये प्रकाशे च प्राबल्यास्वास्थ्यशक्तिषु ।
विभागे बन्धने मोक्षे भावे लोभोर्ध्वकर्मणोः ॥ ५५ ॥

ऊं प्रश्नेऽङ्गीकृतौ रोषेऽप्यू प्रश्ने रोषवाचि च ।
ऋ कुत्सावाक्ययोरेऐ हेहैशब्दाविव स्मृतौ ॥ ५६ ॥

आमन्त्रणाह्वानयोरों प्रणवेऽङ्गीकृतावपि ।
उऊ शब्दौ तु होहौवद्भूतौ सम्बोधनेऽपि च ॥ ५७ ॥

कः पापीयसि कुत्सायामीषदर्थे निवारणे ।
कं सुखे वारिशिरसोः किं प्रश्ने कुत्सनेऽपि च ॥ ५८ ॥

चोऽन्योन्यार्थसमाहारान्वाचयेषु समुच्चये ।
हेतौ पक्षान्तरे तुल्ययोगिताविनियोगयोः ॥ ५९ ॥

पादपूरणेऽवधृतौ तुऽविशेषेऽवधारणे ।
समुच्चये पादपूर्तौ धिक् निर्भर्त्सननिन्दयोः ॥ ६० ॥

नि स्यात् क्षेपे भृशार्थे च नित्यार्थे दानकर्मणि ।
सन्निधानोपरमयोः संश्रयाश्रयराशिषु ॥ ६१ ॥ ६१ ॥

मोक्षेऽन्तभावेऽधोभावे बन्धने कौशलेऽपि च ।
नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः ॥ ६२ ॥

नञीषदर्थे सादृश्ये तद्विरुद्धतदन्ययोः ।
व्यतिक्रमे स्वरूपार्थे निषेधाभावयोरपि ॥ ६३ ॥

वा समुच्चय एवार्थे उपमानविकल्पयोः ।
विशिष्टेऽतीते नानार्थे वै हेतौ पादपूरणे ॥ ६४ ॥

शं कल्याणे सुखे सम्प्रकृष्टार्थे सङ्गमार्थयोः ।
शोभनार्थे समार्थे ह सम्बुद्धौ पादपूरणे ॥ ६५ ॥

हा शुग्दुःखविषादेषु हि हेतावधारणे ।
विशेषे पादपूर्तौ च ही विस्मयविषादयोः ॥ ६६ ॥

दुःखाहतौ च हं रोषभाषणेऽनुनयेऽपि च ।
हुं तर्के प्रश्नेऽङ्ग पुनरर्थे सम्बोधने मुदि ॥ ६७ ॥

अतिप्रोक्तः प्रकर्षार्थे लङ्घनार्थभृशार्थयोः ।
स्तुतावसम्प्रतिक्षेपे आराद्दूरसमीपयोः ॥ ६८ ॥

इति स्वरूपे सान्निध्ये विवक्षानियमे मते ।
हेतौ प्रकारप्रत्यक्षप्रकाशेष्ववधारणे ॥ ६९ ॥

एवमर्थे समाप्ते स्यादुत प्रश्नवितर्कयोः ।
समुच्चये विकल्पे वा शेषः स्यात्समुच्चये ॥७० ॥

मङ्गले संशयारम्भाधिकारानन्तरेषु च ।
अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि ॥ ७१ ॥

अनुर्लक्षणवीप्सेत्थंभूतभागेषु सन्निधौ ।
सादृश्यायामहीनेषु पश्चादर्थसहार्थयोः ॥ ७२ ॥

नन्वाक्षेपे परिप्रश्ने प्रत्युक्तावधारणे ।
वाक्यारम्भेऽनुनयेऽप्यामन्त्रणाऽनुज्ञयोरपि ॥ ७३ ॥

नानाविनोभयानेकार्थेष्वप्यस्तेयहर्षयोः ।
अपकृष्टे वर्जने च विपर्ययवियोगयोः ॥ ७४ ॥

निर्देशार्थे विकृत्यर्थे विबुधैः परिकीर्त्यते ।
अपिः सम्भावनाशङ्कागर्हणासु समुच्चये ॥ ७५ ॥

प्रश्ने युक्तपदार्थेषु कामचारक्रियासु च ।
उपासन्नेऽधिके हीने सादृश्यप्रतियत्नयोः ॥ ७६ ॥

तद्योगव्याप्तिपूजासु शक्तावारम्भदानयोः ।
दाक्षिण्याचार्यकरणदोषाख्यानात्ययेषु ॥ ७७ ॥

अभिर्वीप्सालक्षणयोरित्थंभूताभिमुख्ययोः ।
स्यादमा सन्निधानार्थे सहार्थेऽलं निवारणे ॥ ७८ ॥

अलङ्करणसामर्थ्ये पर्याप्तिष्ववधारणे ।
एवं प्रकारेऽङ्गीकारेऽवधारणसमर्थयोः ॥ ७९ ॥

नूनं तर्के निश्चये वाऽपि प्रश्नेऽनुनयेऽपि च ।
अये क्रोधे विषादे च स्मरणे सम्भ्रमे तथा ॥ ८० ॥

अन्तर्मध्येऽन्ते स्वीकारे ऊर्युररी तथा ।
विस्तारेऽङ्गीकृते वाऽव वियोगे व्याप्तिशुद्धिषु ॥ ८१ ॥

आलम्बने विज्ञाने स्यादेवौपम्येषदर्थयोः ।
निकारेऽवधारणे स्यादुषा रात्रितदन्तयोः ॥ ८२ ॥

अतः स्यान्निर्देशे पञ्चम्यर्थे हेत्वपदेशयोः ।
इतो विभागे नियमे पञ्चम्यर्थे च कीर्त्यते ॥ ८३ ॥

तत आदौ परिप्रश्ने पञ्चम्यर्थे कथान्तरे ।
अहाधिगर्थे शोके च करुणार्थविषादयोः ॥ ८४ ॥

अहः क्षेपे नियोगे चाप्यहो प्रश्नविचारयोः ।
होही हास्ये विचारे स्यादन्तोऽवयवे तथा ॥ ८५ ॥

उत्प्रेक्षायां पञ्चम्यर्थे शासनेप्यहहः स्मृतः ।
खेदाद्भुतयोरित्युक्तोऽनेकार्थाव्ययसङ्ग्रहः ॥ ८६ ॥

अथैकाक्षरा धातवः ।

भू सत्तायाम् । पा पाने । जि ज्रि अभिभवे । इन्दु शुगतौ । ऋ प्रापणे । दैप् शोभने । कै गै रै, शब्दे । खै, खदने । जै सै, क्षये । पै ओवै, शोषणे । उख ऊख इख ईख अग इग गतौ । अञ्चु, गतौ । जज जजि युद्धे । अट पट, गतौ । उठ, सङ्घाते । इट, गतौ । लोटृ लौडृ, उन्मादे । अड, उद्यमे । लड, विलासे । अड्ड, अभियोगे । अत, गतौ । अड, बन्धने । इदि, परमैश्वर्ये । अम शब्दे । अम मीमृ गतौ । शुच्य, अभिभवे । इवि, व्याप्तौ । अव, गतौ । शश, प्लुतगतौ । ईष, उञ्छे । परस्मैभाषाः ।

मीङ गतौ । डोङ्, विहायसा गतौ । उङ् इङ्, शब्दे । कुङ्, गतौ । रुङ्, रोषणे च । पूङ्, पवने । मेङ्, प्रणिदाने । देङ्, पालने । कक, लौल्ये । कुक, आदाने । कङ्क, गतौ । अघि, गत्याक्षेपे । इङ्डुङ्, गतौ । ईज, कुत्सने । अट्ट हिंसातिक्रमयोः । एठ, विबाधायाम् । अठ, गतौ । दद, दाने । एध, वृद्धौ । अठ, शब्दे । उङ्, शब्दे । अय गतौ । वेञ्,

तन्तुसन्ताने । ईष, गतिहिंसादर्शनेषु । ईह, चेष्टायाम् । ऊह, वितर्के । आत्मनेभाषा ।

णीञ्, प्रापणे । हृञ्, हरणे । भृञ्, भरणे । धृङ्, धारणे । कृञ्, करणे । अङ् पूङ्, गतौ । अल, भूषणपर्याप्तिवारणेषु । झष, आदानसंवरणयोः । अस कस, गत्यादानयोश्च । उभयतोभाषा ।

धृञ् सूङ्, गतौ । वृत्, वर्तने । वृत् द्युतादिमध्यात् आत्मनेभाषा ।

वेञ् तन्तुसन्ताने । वृत् । यजादिपरस्मैभाषा ।

अक अग, कुटिलायां गतौ । लड, जिह्वोन्मथने । परस्मैभाषा । **इति भ्वादयः ।**

अद, भक्षणे । भा, दीप्तौ । वा, गतिगन्धनयोः । पा, रक्षणे । ला, आदाने । रा, दाने । दाप्, लवने । मा, माने । इक्, स्मरणे । इण्, गतौ । वी, प्रजनकान्त्यसनखादनेषु । षु, प्रसवैश्वर्ययोः । तु, गतिहिंसापूरणेषु । यु, मिश्रणे । कु, शब्दे । अस, भुवि । षस सस्ति, स्वप्ने । परस्मैभाषाः ।

इङ्, अध्ययने । शीङ्, स्वप्ने । षुङ्, प्राणिगर्भविमोचने । ईड, स्तुतौ । ईर, गतौ कम्पने च । ईश, ऐश्वर्ये । वस, आच्छादने । आङः शासु, इच्छायाम् । आस, उपवेशने । आत्मनेभाषाः । इत्यदादयः ।

हु, दानादनयोः । ओहाक्, त्यागे । भी, भये । पॄङ्, पालनपूरणयोः रुङ्, गतौ । परस्मैभाषाः ।

डुदाञ्, दाने । डुधाञ्, धारणपोषणयोः । भृञ्, पोषणे च । उभयतोभाषाः । **इति जुहोत्यादयः ।**

शो, तनूकरणे । दो, अवखण्डने । छो, छेदने । षोऽन्तकर्मणि । झष, गतौ । सूच्, निरसने । उच, समवाये । वृधु, वृद्धौ । असु, क्षेपणे । परस्मैभाषाः ।

षूङ्, प्राणिप्रसवे । दूङ्, परितापे । दीङ्, क्षये । धीङ्, अनादरे । धीङ्, आधारे । मीङ्, हिंसायाम् । रीङ्, श्रवणे । लीङ्, श्लेषणे । वीङ्, गतौ । एते नव स्वादयः ।

वृङ्, गतौ । अन, प्राणने । आत्मनेभाषाः । **इति दिवादयः ।**

षुञ्, अभिषवे । षिञ्, बन्धने । शिङ्, निशामने । मिञ्, प्रक्षेपणे । चिञ्, चलने । धूञ्, कम्पने । कॄञ्, हिंसायाम् । वृञ्, वरणे । उभयतो-

भाषाः । हि, गतौ वृद्धौ च । दूङ्, उपतापे । प्रीङ्, प्रीतौ । आप्लृ, व्याप्तौ । परस्मैभाषाः ।

हिङ्, गतिवृद्धयोः । अशू, व्याप्तौ । आत्मनेभाषाः । **इति स्वादिः** ।

तुद, व्यथने । विभाषितः । धि, धारणे । षूद, क्षरणे । षू, प्रेरणे । णू, स्तवने । धू, विधूनने । परस्मैभाषाः ।

कुट कुड, शब्दे । कुटादिः । धृङ्, अनादरे । धृञ्, अनवस्थाने । आत्मनेभाषाः । **इति तुदादिः** ।

अञ्जू, म्रक्षणकान्तिगतिषु । उन्दी, क्लेदने । परस्मैभाषाः । ञिइन्धी, दोप्तौ । आत्मनेभाषाः । **इति रुधादिः** ।

ऋषी, गतौ । उभयतोभाषाः । **इति तनादिः** ।

षिञ्, बन्धने । मीङ्, हिंसायाम् । दीङ्, संवरणे । उभयतोभाषाः । रीङ्, गतिरेषणयोः । ली, श्लेषणे । शॄ, हिंसायाम् । भॄ, भरणे । भॄ, भर्त्सने । दॄ, विदारणे । जॄष्, झॄष्, वयोहानौ । गॄ, शब्दे । ॠ, गतौ । मृड, सुखने । अश, भोजने । इष, आभीक्ष्ण्ये । परस्मैभाषाः । वृङ्, सम्भक्तौ । आत्मनेभाषाः । **इति क्र्यादिः** ।

पॄ पूरणे । श्रु श्रवणे । अट्ट अनादरे । लड उपसेवायाम् । ओलड् उत्क्षेपणे । ईड, स्तुतौ । भुवोऽवकल्कने । अव उत्क्षेपे । अज वीट अह्न भाषार्थाः । परस्मैभाषा ।

यु जुगुप्सायाम् । गृ विज्ञाने । लल ईप्सायाम् । आत्मनेभाषा । अङ्क लक्षणे । अङ्ग पदे लक्षणे च । अथ पापकरणे । अन्ध दृष्ट्युपसंहारे । आम आमन्त्रणे । परस्मैभाषाः ।

लो द्रवीकरणे । आप्लृ लम्भने । ईर क्षेपे । भू प्राप्तावात्मनेपदी । **इति चुरादिः** ।

नीलीनानलिनेलोलाललनानलिनानना ।
ललन्नलिननालेनालीनुन्नेनललोनना ॥

द्व्यक्षरः ।

अथ द्व्यक्षराः शब्दाः, यथा—

आलोक कल कोलाल कलङ्क काल अलका काली अलीक एक कुण्डल कला केलि कल कील कलि काल कोल कुल कूल लोकम् लोक आकुल कङ्के

कलिका कालिका कल्लोल लङ्का लक कङ्केल्लि कील किलकिला किलकिल अलीक अलक लङ्का टीका कटक कटकटी कटककूट कोटि कीट कीटिका कण्टिका कूटी कुट्टाक कटुकम् कटटम् ।

अट्टक अटक कृत्तिका कृतान्त कान्त कुन्त अङ्कित कौतुक कङ्क कतक केतकी केतक आकूत आतङ्क कान्ति कृत्त अक्त उक्त मुक्त अर्क कार कारक राका कारिका क्रूर कीर वीर कोरक कारा रङ्क आकर आकार अङ्कुर करि करीर किरि कर्करक आरक कारु किर अकरोत् कारा अकिरत् नाक कानन कनक आनक अनेक नाकि अनीक अनीकिनी द्यौः द्युः दया दायाद दययादः यदु देयात् अदायि उदय उदाय आदाय इन्दूदयः ।

दिवि देव विदिक् वेद विदुः वेदवाद वन्दे वदिव वदावद दव अम्बुद बद बदेत् अबदत् अबबाद विवाद बुद्बुद अमर मरु रामा मार रमा रोम मेरु रुमा आम्र मम मर्म सुर असुर सूर आसार अस्तु सार सौरि सरसा सारस मस्तु अस्रु उस्र सर सार सरु सुरा अमृत मृत मातृ ।

तमप्रत्यय तमस् तातमीति मिमित मत अमुतः माति मातु मत्तम् मत्त तताम अतमि तेमे लेखा आखण्डल खण्ड खल अखेल अखेलत् अखेलि खेलत् खलु अखिल खिल लेखा सुधा सन्धा सौध सिन्धु सीधु साधु असेधत् असेधि ससाध असाधि अनूरु नर नीर नारी विधु बुध विधि वेधाः बन्ध वध वेध बाधा अधावत् अधावि धव वधू सीम भास सम असम सामन् मांस मीमांसा सुम सीमन् सीमा असमत असमि अससामत् तारा उत्तरा तरस् तरु तीर रुत रत रेतस् अतरत् अतारि तेरुः अन्तर तरु इतर अर्ति आर्त अत्र अत्रि अन्त्र आतुर आद्र आर्द्र रौद्री रौद्र रुद्र ।

इन्दिरा दर दूर दारु दार द्रु अद्रि उदर रोदः अरुदत् अरोदीत् रुरोद अरोद अरोदि आदर उदार इन्दिन्दिर दुरोदर रद कक्षा कक्ष कुक्षि आकाङ्क्षत् अकाङ्क्षि अक्ष अक्षि इक्षु उक्षन् धारा धरा धराधर धार राधा रुधिर रोधस् धुरन्धर अधरत् अधारि धुर धुरा रवि अम्बर वीर वारंवारम् विवर वार वर वैर वारि उर्व्वी आरवे उर्वरा अर्वत् वव्रे वैरि वर व अरुण रण रोण अरिणा आरेण अरिणि आरण अर्णः ईरण रणन् रणरण रेणु ऊण ऊर्णा अरुणत् अराणीत् अराणि रराण ।

भानु नाभि नभस् सन्निभ पूषा पौष पिपेष पुपोष अपुषत् अपेषि अपोषि हेलि हलि हल हली हेला दिम नन्दन नन्दिन् दन दीनु निन्दा नाद द्रून

नदी दान नद निदान निन्दु निनद नाद इन्दुना निनिन्द ननन्द ननाद नदीन नन्दन ननाद नुनोद विभा विभव भव भाव विभाव भुवम् भुवः भुवाम् भावी वैभव विभु अभवत् अभूत् बभूव अभावि बभूवे भासः अभासि सभा हरिः षोडशार्थः ।

राहु हरित् हरः रहः रंहः हारः होरा हार हरा आहार हीर अहरहः हारि आरोह आरुरोह अहारि अर्हः । ह्री अर्हं अह्नि रोचिः रुचिः रुचः अर्चिः अर्चा चर्चं चारु चर्चरी चर चार आचार चराचर चारु चारी चञ्चुर चीर चौर चिरम् चिरा रुचिर चचार रुरुचे रुचे अरुचत् अचूचुरत् अरीरचत् घृणि घृणा अभीशु शम्भू शुभ शोभा शुशुभे शुशोच शोच शची शुच शौच धाम मधु अधम इध्म आधमत् धूम मुधा मेधा पाद पादप अपादि पदे पद वसु वासव संवित् आसव सव वास आवास संवासव सेवा वासस् अवसत् उवास महा महस् मही महिमन् मुमोह मिमेह महान् मोह हिम हेम होम तेजस् जाति जाती जित जात तज जन्तु जातु जतु जेता आतप तताप तपः तप ताप तेपे पात पेते पपात तप्त पीत पूत अतीतपत् पितृपौत्र हेति हति हत हन्त आहुति हुत हित हृत आहृत शाप शप शशापे पशु पाश पशी शम्पा अशपत् ।

गल गलि गेल गुड गोला गोल गण्ड गल्ल गिल अगलत् अलगत् अगालि लङ्ग लगु लगुड यशः आशय शय अशायि शय्या शिश्ये आलाप लोप लोलुप अलुपत् अलूलुपत् अल पाल पलि लेप पाण्डु पाल फल लुप पीलू पीडा आपीड आललाप लुलोप लुलुम्प पाल लिपि उलप उडुप उपल उल्लाप अन्य नय न्याय नयन आनन योनि यान यून अयन अन्योन्यम् आनाय आनीय आनिनाय देश दिशत् दिशः दश दशा दंश उद्देश आदेश आदिदेश गीत गति गत उत्तुङ्ग गन्तु गीता आगन्ता गाति नट नटन दाल बाल अबला बला लव अलवत् अलावीत् वला लव वूल वली आवलि आलम्ब वेत्तां वित्त वृत्ति योगि याग योग गेय गाय अगायत् अगायि पान पीन आपान अपान अपीन पुनः ताल लता ताली तालु उत्ताल तल तूल तैल लता तुलित तुला अतुल लाति लातु पल विल एल वलि बल अलीलवत् अलूलवत् ।

वात वृत्त विवृत्त तावत् एतावता वृत्तान्त वृन्त वेता वाता धन धेनु निधि निधान इन्धन उग्र गौर गौरी रङ्ग राग रोग अग्र गुरु गार गिरि गिरा रङ्गत् रङ्क उरग अङ्गिर स अगार अङ्गार रोगी रागी आगः अगिरत् अग्रे मृड मङ्गल मुण्ड मण्ड मौलि माल ललना मल्ल मल्ली अम्ल लोम अमल मिमील अमिलत् शिव शिवा शौव विश्व विश वि‍शा आवेश वश वशा वशी अविशत् विवेश शौव

आर्या आर्यं अय राय ईर्या अरयः ऐयरुः दिति अदिति उदन्त दन्त दन्ति दान्त दुत तदा तुन्द ददि आददति दूत दूति उद्दात्त दत्त उदेति ददातु दयति ददते दत्ते तुदति तुदतु ह्व हाव वाहु बाह्वि वहु वह्निः वाहा हाव विवाह आह्व आहाव अवहत् उवाह हविः बह्वी वहो उशनाः शनि निशा अशनिः ईशान शनैः नाश अनिश शुना शूनः नाश ननाश कवि कम्बु बक कम्बी अम्बिका केवा मन्द आमोद मुदा मोद मिमेदे दम मादाः।

सायम् सेयम् सोयम् असूया आयास अयसा यस्या अयास्यन् दोषा दोष जीव बीज वाजि जव अजीवत् अजीजवत् जिजीव आयाम यम याम मयु मय अमेय आमय माया कुहु कुह माघ मेघ मोघ मघा शिशिर शरत् शौरि शूर राशि शर सहस् सहसा सेहा हास हंस सोहम् सिंह साहस सेहे असह गगन गान नाग नग अनङ्ग काश आकाश कौशिक कुशिक केश कुश अङ्कुश शशक शकम् शुक कोश अशोक शङ्का शुक अनन्त नृत्त नीति नत नति तेन ततान तेने आनीत तनु तनू नूतन नुन्न नेता नुति अभ्र भर भार भीरु भूरि भरी रम्भा आरम्भ बियत् वयस् वायु यव वायु युवन् अवयन् उवाय घन घनाघन कुकुल ककुभ कुम्भ भेक कुम्भी अपाचि चम्पा चम्प अपचत् अपीपचत् चाप चम्पू पर पार पुर पूर पौर अपर अपार आरोप पुरी उदीची उदञ्चत् जम्भ अभजत् अभञ्जि अभाजि भेजे भाज अम्भोज भोज भुज पवि वापी अवपत् अपीपवत् उवाप पीवा अतिभी भूत भीति भित्ति भीता भाषा अभाषि भूषा भिषक् भीषा वचस् वाचा वचा वञ्च अवोचत् उवाच वीचि चञ्चु वाच अगमत् गम आगम मागाः छन्दः आच्छाद उच्छेद अच्छिदत्।

धातुः धाता धौत आधौत अधीते अधीत अधत्त धत्ते धत्तः कंस सेक कसा अकसत् अकासि अङ्गज गज जगौ काम मूक मोक किमु कामिन् कामुक वाणी वीणा वणिक् वेणी बाण सती सीता सूत सुत सित असित आसित सन्ति सन्तु सतत सन्तत सेतु सीता सात मेना मेनाक मनाक् मान मुनि मौन नेमौ नमि नौमी नुमः नामन् मेने मीन मनस् मानिन् जय जाया जय जेय अजयत् जीयात् यज युयोज।

सेना सेनानी सूनु सूना आसन्न आसीन आसन नासा गुहा गुह हिङ्गु गूह अगूह अगाहि चण्डी चण्ड उच्चण्ड चौड चल अञ्चल अचल चेड चौल चञ्चल चलाचल चाचलि चूला चुल्ला चुल्ली लञ्चा आलोचे अचलत् अचालीत् चचाल भृङ्गी भृङ्ग भोग भग भाग भङ्ग भागी भोगी जड जाल लाजा। एवमन्येऽपि ज्ञेयाः।

स्थानमुरःकण्ठादिस्तच्चित्रम् । यथा—

नेताऽनन्तनतोऽनन्तः सोऽव्यालासीदिलातले ।
धुतासिदासितोत्तालदनुसूनुनुतः सदा ॥ ८८ ॥

दन्त्यस्थानः ।

प्राज्यसत्त्वोर्जितस्फूर्तिचर्यो मर्यादयान्वितः ।
समुद्रवदमुद्रश्रीः सज्जो जयति सज्जिनः ॥ ८९ ॥ अकण्ठ्यः ।

एवमन्यत् । एते शब्दाः सुप्राप्यत्वान्न दर्शिताः ।

गतिर्गतप्रत्यागत, गोमूत्रिका, तुरगपद, पादगतप्रत्यागतार्द्धगत, सर्वतोभद्राऽर्धभ्रमादीति । तच्चित्रम् । यथा—

शूरः स्थिरतरस्फारशरभारधरः पुरः ।
आरवैरभरस्मेरवीरवारहरः परः ॥ ९० ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शू | स्थि | त | स्फा | श | भा | ध | पु | |
| र | र | र | र | र | र | र | रः | रः |
| र | र | र | र | र | र | र | रः | |
| आ | वै | भ | स्मे | वी | वा | ह | प | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शू | स्थि | त | स्फा | श | भा | ध | पु | |
| र | र | र | र | र | र | र | रः | रः |
| आ | वै | भ | स्मे | वी | वा | ह | प | |

गोमूत्रिकाद्वयं, पूर्वाधापरार्धयोरथ वा आद्यद्वितीययोः, तृतीयचतुर्थयोश्च पादयोरिति द्वौ भेदौ । अथ तुरगपदरीत्या श्लोकाक्षराङ्कन्यासः ।

श्रोत्रिंशन्नवविंशतित्रयजिनश्रीकण्ठषड्विंशतीन्दुकलोनाविंशतियुग्मपौषदशभावेदत्रयोविंशतिः । सत्रिंशद्विपसत्कलाभुवनतत्षड्वर्गवर्णांशुमत्सेनापक्षसुलक्षणस्वरसभासार्कद्विविंशाः शराः ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | ३० | ६ | २० | ३ | २४ | ११ | २६ |
| १६ | १९ | २ | २९ | १० | २७ | ४ | २३ |
| ३१ | ८ | ७१ | १४ | २१ | ६ | २५ | १२ |
| १८ | १५ | ३२ | ७ | २८ | १३ | २२ | ५ |

} तुरगपदाक्षराङ्क-न्यासः।

चतुर्भिः पादैः क्रमेण चत्वारः पादाः, प्रतिपादमष्टौ अङ्कस्थानानि। श्रीः, एकः। जिना श्चतुर्विशतिः। श्रीकण्ठा एकादश। इन्दुकलाः, षोडश। ऊनाविंशतिरेकोनविंशतिः। पौषदिनान्येकोनत्रिंशत्। भानि, सप्तविंशतिः। सत्रिंशदेकत्रिंशत्। सत्कलाः सप्तदश। भुवनानि चतुर्दश। तन्मुख्य एव वर्ण, एकविंशतितमः। वर्गवर्णाः, पञ्चबिंशतिः। सेना, अष्टादश। पक्षतिथयः, पञ्चदश। लक्षणानि, द्वात्रिंशत्। स्वराः, सप्त। सभानि, अष्टाविंशतिः। सार्कस्त्रयोदश। द्विविंश, द्वाविंशतिः। शराः, पञ्च। शेषं सुगमम्। हृदयपदस्य रीत्यन्तरम्।

हृद्वयपीहिपैयिदायैपिहादुयादिहीपे।
देहैपयूपुहृदयीपायेदैहेदीयुपूहु ॥ ६१ ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| हृ१ | द्व | य | पी | हि | पै | यि | दा |
| यै | पि | हा | दु | या | दि | ही | पे |
| दे | है | प | यू | पु | हृ | द | यी |
| पा | ये | दै | हे | दी | यु | पू | हु |

} तुरगपद-बन्दः।

हृयपद इति चत्वारो वर्णाः, श्लोकेऽपि चत्वारः पादास्ततो यथाक्रममेकैकपादं प्रत्येकैकवर्णो ज्ञेयः। स्वरैरक्षरसंख्या ज्ञेया। अ आ इ ई उ ऊ ए ऐ, इत्यष्टस्वराः, श्लोकपादे चाष्टवर्णाः। यथा—ह हा हि ही हु हू हे है, य या यि यी

यु यू ये यै, प पा पि पी पु पू पे पै, द दा दि दी दु दू दे दै। अयं श्लोकस्तुरगपदेन कृतो हयदूयपीत्यादि।

का रता निजह्वावेन
नवेह्वाजनितारका ।
चारुमारपराधीन
न धीरा परमा रुचा ॥६२॥
} पादगतप्रत्यागतम् ।

एवमर्धगतप्रत्यागतादीनि । अनुलोमप्रतिलोमशब्दाः, यथा—दिवं दिवा दिवे नाकं देवा देवं देने नवदेदता खेल लेखन दान वर वीभानु भानो द्योतन हंस हंसा हेलि दिन दिना यादीने विभा भासः विकर्तन जगच्चक्षुः धामाकरं करे महातेजाः सदा लोक सदालोकः विनता कलङ्का तारका तारया कालिनी राधा राधया हरि देव जीवा भार्गव कविना राहो वातापिना कालो कालं शावं निशया तमा तमिस्रा याम माया मेया मतः पक्षि राका मास मासे सह्रा माधव नभ तप कल्पान्त क्षय गगन बलाहकाः सुत्रासा शुनासीर जम्भा देव नन्दो नन्दन वन यम यमराज राक्षसाः पलादो नलकूबर रस विभवेन शङ्करम् ।

व्रती हर हरम् पिनाकेऽपि पिनाकिना गङ्गा कपालिना मेना भैरवी हेरम्ब हेरम्बा विनायक नन्दी स्थविर विधातापि वेधसा जनार्दन दामोदर सनातन वनमालिका विभुकैटभा वैनतेय कंसा कंसे नन्दकरामा सहसान्वितः बलाबलं बला नालीका रमा रमया मदन पातालोकः भारती वेदाः वेदना वेदैः वत वह लोक सार निन्दा शापा तुङ्गम् यन्त्र ताल रव तालाघना तोयघनयोः वशा वश कच्छपिका कोलम्बक तत मृदङ्ग रागरागौ हस हास हासि कार दरदा अट्टहास अतिहास शोक कोश कोप उद्यम उद्योग अतिभा आन्तकम् ।

कटकी कटकम् कम्पम् कम्पा रोदना रणरण ककाम मेधा मोक्ष मद शयन संलये शङ्का नवतमसम्मद सानन्दा तत गर्व साहङ्कारं साहङ्कारा ममतामानेन स्मयेन साहमहमिका सम्भावनं सम्भावना सम्भावनया कार्पण्य रुत दैन्यवती सव्यायाम सद्व्यायामा श्रमता मोहो सत्र सत्रा आवेश दम सभ्रमता उन्नयन साध्याहार वितर्क मनिश कालेन कालो सायम् वासना मारका यन्त्र विभावेन विभावा ततभावि अनुभावतः व्यक्त वनभावोन रस एषा भूमिका

पात्र वेष महसासभरत रसा पुत्र रङ्ग रङ्गावतार रतागारसा नसावतार रङ्गावतार करं क्षम सकल शैलाली नामधारक धनधारक सरवक वसु नान्दो वास वासन्तिक वैहासिकोपिता अबुकं चिर हास भावुकं भावो राज हावा हेवा हावेन कुमार कुमारा दारक बाला स्वसा भदन्त निजा योज्या मन्तुजमनुजा मानव पोत वशा क्षीर शैशवे नसवालता वयः_।

तरु युवा नतारुण्यपुलक चारुण्यङ्ग यौवन प्रवयाः जरयात याम विशसा स्थविर जल्पाक यद्वद पतन यद्वदपरमा दोनावादिवन्दिता विकस्वर वदान्यामदविधेयो दवानशूलिका स्वैरितापरवश पराधोन स्थावरव्यायाम नाल कविवर्णना मेधा विवित् विशारद सशनिमनीषितो विपत् निष्णातोन्तः रक्ष कुशलेन दमप्रतिभान्वितः अन्तर्वाणि रसावेद वदावद पतापत घनाघन वे दुर्विधोः मनः निम नियोज्य परिचारक दास वस्वतन भारिक भासे अलङ्कातर-भीतेन महेच्छस्वया महामनाः कीनाश किम्पचान देवा अनुक्रोश कदनं बन्धनं निर्वासन निर्वापणक वर्जन कर्तन कल्पन जल्पना अवर्द्धनैः घातोद्यत आततायिन नामालेखियशः तेमृतासरतापापं व्यंसक जालिक कैतव सभ्यापिशुना व्यसनार्त्तक स्तेना ऐकागारिक स्तेय नन्द प्रणव दान त्याग अर्थ व्यय याचका याचन सहन अशनाय रोचक पिपासु पिपासा रसा दान मस्तु तरला निला निष्ठा नते मन रम्भा लाजा शून्य रसायन दानव भारं सभा वितं काञ्चनी धान्य धान्याक नागरम् ।

विदेहो जनुके ग्रासो लावक उदार कामना व्यसन बन्धन रोचन मांस पीवानं पीवर अनासिके तनु गता केशव वार्तकि रोम सदा सदामय पामा रव सक्षत कलं नीलीराग लेखक कुलिक खेलिनो शिवङ्कर शवल जवो वेग रंहः तर सेवा देवेन जव जाव सहा योगामिका गारव जात्यक्षयवंश वनिता वशा वासा तरललोचना मनोज्ञ कहाव रजाः यातरः वया विना समे सुता मालिनो गर्भ पौत्र वैजन नमास देवर गोलक समान ननान्दा नवर केलिना देवन पिता महसा उपमाता घना काय देहः कुन्तला पाशा रचना केशांशः कशा केशे लपन वदन लोचन विलालन निध्यान द्योतन लोम रदन रदना दशना पक्ष्मा मेलक करजा खननातालिका मेद कङ्कालम्, बलम् ।

लव सानन्द विलेपना यक्षकर्दम घनसार स्थासक कम्बलम् नववसन शयन बोध ऊर्ध्व लोक अमराः असुराः विमाना गभस्ति वसुधा सुधा अर्य्यमा तरुणि अ अर्य्यंस अर्कतः पतङ्ग विरोचन हरि आतपी आतपी लक्ष्मप मङ्गल अङ्गारक उशना आगस्त्या उपराग वासर विभात त्रियाम तिमिर हेम अल्पक अन्तरिक्ष आकाशम् अम्बरम् अनघ बलाहका आसार अपरा विदिक् कौशिक मातलि अमरावती मन्दार सन्तान अतिभी लेखक कौणप यातुधान कुबेर धनदा अलका अणुस्था अजगवम् अलीका महादेवी एकदन्त शतानन्द उत्सवश्रीः नरक अलम्ब अङ्गज दनुज सरस्वती अतिहास वैनतेय अर्थवाद कौलीन विगान आक्रोश आक्षेप अभिख्या सम्भाषा नियोग गन्धर्व्व अनुत्तरे चर्व्वण अन्ववाय जनन धाना अक्षत पत्रल उपल दधिसार न्याय अदन आशंसा अविनीत क्षारित अंसल मांसल विकलाङ्ग पाटव राजयक्ष्मा कुरङ्ग उपचार हरिद्रा राग व्राती सभासद पीत दम्भ अङ्गमर्दक ऊर्ध्वन्दम अतिजव जवन आराधना धन्योऽसि बक पदाति आवेशक पाद्य सम्मता ।

ग्रामेय कुलीना रामा ललना अङ्गण उपमानेन विलास चर्या वल्लभा दम्पती भोगिन्यौ स्वतन्त्रा मातुलानी श्यामा कात्यायनी वारवधू आर्त्तप संवेदन दोहद आसन्नसत्त्वा कलल दास सोदर अवरज कनीयान् मातुला ननान्दा ननन्दा नन्दिनी हाली परिहास देवन उपमानी वीरमाता श्वशुर पितर भ्राता बान्धव आयतन खालक कुणप कबन्ध अवयव राशिक लाप भ्रमरक अलका भ्रमरा लक संयता सीमान्त केशपाश काकपक्ष वेष्टन भावनीय अवलोकन निशामन द्योतन अयाङ्ग विकार नासिका जीभा रसना कन्धरा अनामिका कामाङ्कुश तिलक रोमलता आरोह जघन वराङ्ग जङ्गल पलल परिकर्म अङ्गराग संवर्त्तन कीलक नायिका तरल ललामक लज्जा कर्णपूर कर्णिकाहारी अङ्गद वलय रसना सारसन कार्पास उच्चल जलार्द्र ललिम तलिमा यावक कज्जल दीप पार्थिव त्रिशङ्कु ।

एकार्थत्वेऽनुलोमप्रतिलोमशब्दाः, यथा—

कलङ्क पतदातप वासवा कौशिकौ विभवि कालिका तावता कारिका कीरकी नयन अपलाप नर्त्तन नन्दन साध्वसा वरभैरव कलपुलक कटक कण्टक नध्यान जाड्यजा नपुनः दैत्यदैः महेम आर्कणिक आयास्तया कोलकोपोत्ययो

स्तपास्त विभावि यातया नाद्येना जायाजा कचसूचक नान्दीनाम् हासीहा हाववहा सूरिसू दक्षद वाचावा लोहली स्वेच्छास्वे तानेनेता गोप्यगो भीरभी पापा शय्याश बतकैतव दम्भद साभ्यासा नार्दना कचक नवेन नव्येन लगुड काङ्क्षाका कामुका अर्हणार्हअ वलीव केशके वरयारव उपतापउ कोपतापको जायुजा कच्छक सरस निधनि विधवि स्यदस्य सहास जनज जात्यजा गोत्रगो योन्वयो जननज कान्ताकाम् ।

स्मितास्मि भावभा हाववहा हेलाहे गौरीगौ मध्यम तरुणीरुत जनीञ्ज सूनुसू याजाया वनीजनीव दम्पतीपदं योग्ययोः साध्वीसा यातिया द्वन्द्वं दोहदो कललक योनयोः यामेयाः श्रद्धाश्र दास्यदा रदसोदर बान्धवां गात्रगा देहदे भारभा हस्तह केशाङ्के भालेभा दंष्ट्रादं दन्तदं दंशदं नदखदन तालुता पाणिपा पललप लङ्काकङ्कालं अङ्गरागअं कण्ठिकं काञ्चिकां कञ्चुकं तल्पतः जनुजः भूरिभूः नुततनु कनक । एवमन्येऽपि ज्ञेयाः ।

आकारः खड्गाद्याकृतिस्तच्चित्रम् । यथा—

**श्लेषार्थोपसङ्गृहीतैरन्त्यादिसदृशाक्षरैः ।**
**प्रतिलोमानुलोमस्थैः शब्दैश्चित्रसमुद्भवः ॥ ३ ॥**

श्लेषव्युत्पादनस्तबके सदृशव्यञ्जनान्तरसदृग्व्यञ्जनादिशब्दैः प्रभाभास्वत्प्रमुखैरत्र चित्रस्तबके सङ्गृहीतैरनुलोमप्रतिलोमशब्दैश्च सर्वाण्याकारचित्राणि सम्भवन्ति ।

**सर्वेष्वाकारचित्रेषु वर्णावृत्तिस्तु सन्धिषु ।**
**लाघुच्चारे लघुलघुप्रयत्ने बवयोरपि ॥ ४ ॥**
**संयुक्तयोः सजातीयवर्णयोर्णनयोस्तथा ।**
**स्वरवर्जितमनयोर्विसर्गाभावभावयोः ॥ ५ ॥**
**डलयोश्च विरोधो न यमकश्लेषचित्रयोः ॥**

गतार्थम् ।

भारती भक्तगीर्वाणगणस्तुतपदाम्बुजा ।
जाग्रत्कुन्देन्दुमन्दारशरदभ्रसमप्रभा ॥ ६३ ॥

भास्वदम्भोजनिलया निर्भाग्यजनदुर्लभा ।
भागधेयं भावभृतां तनोतु प्रतिभामयम् ॥ ९४ ॥

{ खड्गबन्धः ॥

नभोबननदीपीननलिनाननलोचनम् ।
ननौमिननयानूनं नमज्जननतं जिनम् ॥ ९५ ॥



अष्टदल कमलबन्धः ।

विश्वावरोधाय विरोधबाधकाविपत्तमोजालविकर्तनोर्जिताः ।
विधूदयद्धामविशुद्धकीर्तिभा विभान्ति सन्तः सविवेकवैभवाः ॥ ९६ ॥
वावं स्मृत्वा यतीन्द्रेण काव्यकल्पलता कृता ।
तारश्रीरमरेणेयं भावनीया सतां गणैः ॥ ९७ ॥ परिधिश्लोकः ।



अष्टार-चक्रबन्धः

गणेशोऽङ्गगलत्त्वङ्गगङ्गासङ्गगलोरगः ।
गरभुग्गगनाभोगगतिस्तुङ्गगणानुगः ॥ ९८ ॥



अष्टदल कमलबन्धः ।

एवं विधश्लोकैर्बहुचित्रसिद्धिः । शूरेत्यादिपूर्वोक्तगोमूत्रिकासदृशैः श्लोकैर्गोमूत्रिकाद्वयम्,



षोडशदल कमलबन्धश्च ।

षोडशदलकमलबन्धस्य श्लोकम्; यथा—

शूरः स्थिरतरस्फारशरभारधरः पुरः ।
आरवैरभरस्मेरवीरवारहरः परः ॥ ९९ ॥

एवं बहुचित्रोत्पत्तिश्च। एवं मुरजधनुर्बन्धादयः। क्रमाच्चतुर्विधं च्युतम्, यथा मात्राहीनीकृतेषु वर्णेषु येषां शब्दानामर्थो मिलति तैः शब्दैर्मात्राच्युतं स्याद्यथा—

देशान्तरावृतान् भावान् कलातीतानपि स्फुटम्।
केवलं ज्ञानतो योगी प्रत्यक्षानिव वीक्षते ॥ १०० ॥

देशकालकेवलैः शब्दाः, यथा—

बाल चार वीर पार कोमल केकि अलीक क्रूर भार मार हार कार तार दार पार धार स्फार सार ताल नाल हाल हेलि कृपाण उन्माद तडाग काच प्रवाल प्रहार भारत जाया प्रभृतयः। येषु शब्देषु अर्द्धमात्राहीनीकृतेष्वप्यर्थो मिलति तैरेवार्द्धमात्राच्युतं भवति। यथा—

मध्येसूरिसभं भूरि स्वीकृतानङ्गसङ्गमाः।
न लभन्ते नराः शोभां भानीव रविभानुषु ॥ १०१ ॥

सङ्गमा इत्यत्र ङ्कारो व्यञ्जनयुतं व्यञ्जनश्चार्द्धमात्रकम्।

ताडकाश्रितशृङ्गारा सारङ्गानचलेक्षणा।
आलोकितापि लोकस्य मनो हरति कामिनी ॥ १०२ ॥

अत्र ताडङ्कसारङ्गेति शब्दाः, यथा—

स्यन्द मन्द मन्द्य भङ्ग सदरङ्ग सम्मद स्वज करञ्ज कबन्ध वन्दन नन्दन सम्भ्रम संवर सङ्कर कम्बल काञ्चन करम्भ गण्ड सम्बल जम्बीर चित् अञ्चल करञ्जादयः। सानुस्वारवर्णेषु निरनुस्वारीकृतेष्वपि येषां शब्दानामर्थो मिलति तैर्बिन्दुच्युतं स्यात्, यथा—

साहसेनाश्रिता पद्मालयेन जलदात्यये।
अर्णवस्याभिसरणे रहो मुह्यति वाहिनी ॥ १०३ ॥

अत्र हंसरंह इत्यत्र बिन्दुः शब्दाः, यथा—वंश हंस दंश रंहः प्रभृतयः।

'येषां शब्दानामेकाक्षरे लुप्तोऽप्यर्थे मितति। शब्दैरक्षरच्यूतं स्यात्। यथा—

पार्वतीपतिपादाब्जसेवाहेवाकिल मानसः।
सुदुस्तपं तपः कुर्वन् न दावो देवनीप्रदः ॥ १०४ ॥

अत्र दानव इति शब्दाः'[1]।

मीमांसा पिनाकि कुमार केशव कन्दर्प कलापि कपर्द्दी काकोल जवन जघन

१. कोष्ठाङ्कितः पाठः क्वचिन्न मिलति।

चरण गाङ्गेय गौरव केसर चुम्बक नक्षत्र नगर खञ्जन नगरञ्जन प्रभृतयः। अथ वा

नतनाकिमौलिमणिमण्डलीविभा-
भरभासुराङ्घ्रिसरसीरुहा सताम्।
शिवशर्मणे भवतु भारती भृशं
दृढजाड्यखण्डनदिनेशभाततिः ॥ १०५ ॥

अत्र नन्दिनीच्छन्दसि प्रतिपादमाद्याक्षरद्वयपाते रथोद्धतावृत्तेन आद्याक्षर-द्वयपाते, अन्त्याक्षरद्वयपाते च भद्रिकावृत्तेन भारतीस्तुतिः। अयं वर्णच्युतप्रकारः छन्दोमर्माणि ज्ञात्वा साधारणशब्दैः साध्यः।

अथ चतुर्विधं गूढम्, यथा क्रियागूढे भङ्गश्लेषाद्युपायैरेकाक्षरादिकाः क्रियाः प्रयोज्याः। यथा—

यथा यथा त्रस्तकुरङ्गनेत्रा प्रियापुरो मेऽद्य तिरोहितश्रीः।
महोदधेः स्फारतरङ्गभङ्ग्या तथा तथा प्रेममयं मुदाऽहम् ॥१०६॥

अत्र, मेद्यति, दधे च क्रिये। क्रिया यथा—अस्ति, स्तः, अस्मि, स्वः, स्मः। प्राणितिरोहितः। एवं भवति, यक्षति, प्रभृतिभ्यो रोहितः। बिभेति, बिभीतः बिभीमः, इर्षि ददासि बिभृतः, मिमते मिमे जिह्रोते स्यति स्य दूयते मीयते लीयते, इत्यादि। आभा आरुः आश आशुः ईयः प्रभृतयः।

**कर्तृकर्मादिगुप्तादि भङ्गश्लेषेण साधयेत् ॥ ६ ॥**

यथा—

मा न कोपभृते पुंसि शाश्वतीं स्थितिमाश्रयेत्।
शङ्खेभ्यो नाप्नुयात्कोऽपि देशः प्राप्नोति कङ्कणैः ॥ १०७ ॥

पूर्वार्द्धे कर्तृगुप्तम्। मा, न। लक्ष्मीर्न। उत्तरार्द्धे कर्मगुप्तम्। खेभ्य, इन्द्रियेभ्यः शं, सुखम्। कणैः, कं, सुखम्।

**सम्बन्धगूढमपि भङ्गश्लेषेण साध्यम्।**

बालया पृथिवीपाल व्यलोक्यत तयाननम्।
तदाप्रभृति तां निम्घ्ने स्मरः स्वशरवेध्यताम् ॥ १०८ ॥

ते आननमिति सम्बन्धो गूढः।

**पादगूढे चतुर्थपादवर्णाः पादत्रये क्षेप्याः ॥ ७ ॥**

यथा—

त्वं दोर्बलादरो देव सोद्रेकदरशक्लृकृत् ।
त्वद्यशोऽरं मुदं दत्ते[1].........॥ १०९ ॥

अत्र पादत्रये चतुर्थः पादो गुप्तः । "कुमुदोदरसोदरम्" । द्वात्रिंशत्कोष्टकेषु श्लोककरणविधिः ।

**प्राक्कोष्टकेषु न श्लोकाः पूरणीया विचक्षणैः ।**
**केवलं प्रश्नवेलायां पादः कार्यो नवो नवः ॥ ८ ॥**

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां
काव्यकल्पलतावृत्तौ श्लेषसिद्धिप्रताने तृतीये
चित्रस्तबकः पञ्चमः सम्पूर्णः ॥ ५ ॥

॥ सम्पूर्णश्च श्लेषसिद्धिप्रतानस्तृतीयः ॥ ३ ॥

१. त्वद्यशोऽरमिति पाठान्तरम् ।

## अथ चतुर्थप्रताने प्रथमः स्तबकः

अथार्थसिद्धिप्रतानस्तत्र प्रागलङ्काराभ्यासः।

**उपमाद्यानलङ्कारानभ्यस्येदर्थसिद्धये।**
**हृद्यं साधर्म्यमुपमा सोपमानोपमेययोः ॥ १ ॥**

धर्मोपमावाचकयोश्चोक्तौ पूर्णा मता, यथा—

शशीवास्यं मुदं दत्ते लुप्तैकद्वित्रिलोपतः।
उपमानस्य लोपे तु रम्यं मुखमिवास्ति नः ॥ १ ॥

धर्मलोपे शशीवास्यं लोपे धर्मोपमानयोः।
कुसुमं मालतीतुल्यं न भृङ्गो लभते भ्रमन् ॥ २ ॥

धर्मवाद्युपमानानां लोपे हरिणलोचना।
एकस्मिन्नुपमेये तु बहूपमानयोगतः ॥ ३ ॥

अभिन्ने वाऽथ भिन्ने वा धर्मे मालोपमा भवेत्।
अनयेनेव नृपतिर्धार्ष्ट्येनेव कुलाङ्गना ॥ ४ ॥

कार्पण्येनेव कमला, कला गर्वेण दूष्यते।
पीयूषमिव सुस्वादुर्भास्वानिव विबोधकृत् ॥ ५ ॥

ज्ञानीव तत्त्वनिष्णातः सतां वचनविस्तरः।
यत्र यात्युपमानत्वमुपमेयं यथोत्तरम् ॥ ६ ॥

सा भिन्नेनाप्यभिन्नेन धर्मेण रसनोपमा।
साधोर्धीवित्तता विद्या विद्यावद्दोषहृत् क्रिया ॥ ७ ॥

क्रियावत्प्रीतिकृद्वाणी वाणीवत्कीर्त्तिरुज्ज्वला।
यस्यासीद्विमलं शास्त्रवद्वित्तं वित्तवन्मनः ॥ ८ ॥

मनोवद्दानं दानवद्यशो विश्वत्रयीमुदे।
परिकल्प्योपमेयं तु स्वेच्छया सविशेषणम् ॥ ९ ॥

सदृशस्योपमानस्य कल्पने कल्पितोपमा।
उपकण्ठस्थवक्षोजयुग्ममस्या मुखं बभौ ॥ १० ॥

वैरिस्त्रीकुचाश्रयणं तस्याः कारणं पूर्वजक्रमस्ततो मत्पूर्वजः कृपाणो रिपुकुम्भि-कुम्भेषु विललासेति कृपाणोद्भवं नृपयशोऽपि कुम्भिकुम्भसोदरेषु वैरिस्त्रीकुचेषु पाण्डिमच्छलेन विललास ।

**आरोप्य वर्ण्यवस्तूनां क्रियासु सदृशोः क्रिया ।**
**तासां रोपितक्रियाणां कल्प्यमुत्पत्तिकारणम् ॥ ३ ॥**

वर्ण्यवस्तूनां क्रियासु कम्पनादिषु नर्तनादिकाः, भ्रमरकूजनादिषु जपन-स्तवनाक्रन्दाशीर्वचनादिकाः, क्रिया आरोपयेत् । ततस्तासामारोपितक्रियाणां नर्त्तनादीनां हर्षादीनि, जपनादीनां श्रेयः प्राप्त्यादीनि, कारणानि कल्पनीयानि ।

इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां
काव्यकल्पलतायामर्थसिद्धिप्रताने चतुर्थे क्रियास्तबकश्चतुर्थः ॥ ४ ॥

●

## अथ चतुर्थप्रताने पञ्चमः स्तबकः

अथाधारपरिवारादिभ्योऽर्थोत्पत्तिर्यथा—

**वनगिरिजलभास्वद्वातशीताग्निलोह-**
**प्रहरणपरघट्टाभ्येतजन्तूपकारैः ।**
**सरिदधिगममौनध्याननैश्चल्यमन्त्रा-**
**नशनमखिलभोगायाचितक्षान्तिसत्त्वैः ॥ १ ॥**

वर्ण्यवस्तुना निर्जितस्य सदृशस्य वस्तुनो वनादिभिरमीभिर्भावैरर्थः समर्थनीयः । यथा—स्त्रीनेत्रजिता मृगा वनं गताः । मध्यजितः सिंहो गिरि-गह्वरे प्रविष्टः । मुखजितं कमलं जलदुर्गमगात् । स्थैर्यजिता गिरयो भास्वत्ताप-वातशीताग्निमुखदुःखानि सहन्ते । भ्रमरः सङ्घट्टं तितिक्षते । अभ्येतहंसादीनां शरीरखण्डैरप्युपकारं कुरुते । गतिजिता हंसाः शरदधिगमं कुर्वते । दम्भजितो

बकः सरित्तटे। मीनो ध्यानं कुरुते। तुङ्गत्वजितो मेरुलोकोऽदृश्ये स्थाने निभ्रलीबभूव। मुखजितं कमलं भ्रमरारवैर्मन्त्रान् जपति। नखजितानि रत्नानि गिरौ निराहाराणि तस्थुः। अधरजितानि प्रवालानि जलमध्ये जलाहारतया वर्तन्ते। अङ्गसौकुमार्यजितं शिरीषकुसुमं वनेऽयाचितवृत्ति कुरुते। मुखजितं कमलं भ्रमराङ्घ्रिघातैरपि क्षमां कुरुते। उदाहरणानि। वर्ण्येन जितपदार्थस्येत्यादिभिरुपायैरर्थः समर्थनीयः।

**लज्जाकोपतपोनाशसेवाक्रन्दास्यकृष्णताः।**
**रागात्पाण्डुरता शस्त्रीविषझम्पादियोजिने ॥ २ ॥**

वर्ण्यजितस्य वस्तुनः पराभवोद्भवा एते लज्जादयो भावा यथौचित्यं योजनीयाः। यथा—मुखजितं पद्मं लज्जयेव वनं गतम्। कोपतप्तमिव जलाशयं ययौ। नद्यामाकण्ठमग्नं जलाहारतया तपस्तनुते। अथवा जलदुर्गंनष्टं शम्भोरम्भोमूर्तेर्वा सेवां करोति। भ्रमरारवैराक्रन्दं कुरुते। नीलालिभिः कोकनदमनुरक्ततां धत्ते। नेत्रजितं कैरवं दुःखात् पाण्डुरतां गतम्। भृङ्गश्रेणीमिषादुदरे शस्त्रीं क्षिपति। जलान्तर्झम्पां ददौ। भृङ्गमिषाद्वा विषं भक्षयति। एवं यो रक्तपदार्थः स सदृशेन जितः कोपादिव रक्तोऽप्यथवा कयाचिद्युक्त्या सानुरागो भणनीयः। य श्वेतः श्यामश्च सदृशजितो दुःखादिवोत्पाण्डुरः कृष्णश्च समर्थनीयः।

**वृक्षाङ्गादिजवस्तूनां वनाद्यैः सत्पदादिकम्।**

किञ्चिद्वस्तु वृक्षाङ्गादिमयं किञ्चिन्मृन्मयं किञ्चिद्धातुमयं किञ्चित्पाषाणमयं किञ्चिद्धर्ममयं किञ्चित्कार्पासमयमित्यादिवस्तूनां वनवासादितपोभिः शुभस्थानाश्रयशुभाकारशुभक्रियाशुभपरिवारादीनां प्राप्तिः सम्भाव्या। यद्वृक्षाङ्गादिमयं वस्तु तस्यैते भावा विभाव्याः। यत्पूर्वं वृक्षभवे रवितापशीतवातादिकष्टमयाचितव्रतादिभिस्तपस्तप्तं तन्मूलत्वक्पत्रपुष्पफलच्छायादिभिः सूर्यातपतप्तानां रोगार्तानां भोगार्थिनां मङ्गलार्थिनां मर्त्यानां भृङ्गाणां पक्षिणां चतुष्पदानामुपकृतं तेन वृक्षाङ्गमयवस्तुनः शुभस्थानादिप्राप्तिः। मृन्मये वस्तुन्येते भावाः समारोप्याः[1]। यत्पूर्वं कुद्दालघातपादप्रहारयन्त्रबन्धप्रवेशचक्रारोहणचक्रभ्रमणपाषाणपिण्डिकाकाष्ठहस्तकरघातरवितापशोषवह्निप्रवेशपरीक्षार्थं शिरःप्रहारादिभिः कष्टमनुभूतं, यत् जनबुभुक्षातृष्णाहारान्नजलाधारतया लोकोपकारः कृतस्तैः सुकृतैर्मृन्मयवस्तुनो भव्याधारादिकमारोप्यम्। धातुमये वस्तुन्येते भावा भावनीयाः। यत्पूर्वं वह्निप्रवेशहस्तपुटघातसन्दंशग्रहणयन्त्रान्तराकर्षण-

१. समर्थनीयाः, इति पाठान्तरम्।

ताडनच्छेदनघनप्रहारटङ्किकाघातादिकष्टमनुभूतं, यद्देवादिमण्डनतया कान्ती-भूषणतया लोकाप्यायकभोजनोदकाद्याधारतया देवदेव्यादियन्त्राधारतया लोकोपकारः कृतस्तैः सुकृतैर्धातुमयादिवस्तुनः शुभस्थानादि सम्भाव्यम्। पाषाणमये वस्तुन्येते भावा भाव्याः। यत्पूर्वं टङ्कविदारणघनप्रहारटङ्किकाघातादिकष्टमनुभूतं यद्धर्मस्थाने देवतादिहेतुतया परोपकारः कृतस्तैः सुकृतैः पाषाणमयवस्तुनः शुभस्थानादि सम्भाव्यम्।

चर्ममये वस्तुन्येते भावा आरोप्याः। यत्पूर्वं कर्तिकाच्छेदनक्षारक्षेपविक्रयचर्मकारपादपातरम्पिकाच्छेदसूचिकावेधदवरकबन्धव्यङ्गप्रहारादि कष्टमनुभूतं यत्पादत्राणतया, ब्राह्मणाद्युपयोगिकरपत्रिकादिकतया, पुस्तकाद्यावरणतया इत्यादिभिः परोपकारः कृतस्तैः सुकृतैश्चर्ममयवस्तुनः शुभस्थानाद्यूह्यम्। कार्पाससूत्रमये वस्तुन्येते भावा भाव्याः। यत्पूर्वं शीतवाताद्ययाचिताम्बुपानकर्मकरनखच्छेदविक्रयापवरकान्तरक्षेपलोहोपलघर्षणतुलारोहणान्तःसाराकर्षणपिञ्जघातनविदारणयन्त्रारोहतर्कुभ्रम्याकर्षणतन्तुवायकराकर्षणकाष्ठप्रहारविपणिक्रियादि कष्टमनुभूतं तूलेन, तूलिकादिरूपतया वस्त्रेण परगुह्याच्छादनदेवतादिपरिधानादितया लोकशीतातपादित्राणादितया परोपकारः कृतस्तैः सुकृतैः कार्पाससूत्रमयवस्तुनो भव्यस्थानादि सम्भाव्यम्। एवं सर्ववस्तूनां पूर्वंकृतं कष्टं सुकृतं वाऽऽरोप्य भव्यस्थानाश्रयादिभिरर्थः समर्थनीयः।

**जितस्य सेवा स्वगता च्छद्मगा प्रतिबिम्बगा ॥ ३ ॥**

जितस्य द्वौ प्रकारौ भवतः। विदेशगमनं जेतुः सेवाकरणं वा। विदेशगमनं वनादिषु प्रपञ्चितम्। सेवा तु त्रिविधा। स्वगता यथा—

भारत्या गतिजितो हंसः पदसेवां चकार।
पार्वतीमध्यजितः सिंहः सेवां कुरुते सदा ॥ १ ॥

छद्मगा यथा—

कामिन्या वक्त्रजितः सर्पो वेणीमिषादनुचरीभूतः।
मुखजितश्चन्द्रश्चन्दनवृत्ततिलकच्छद्मना सेवते ॥ २ ॥

प्रतिबिम्बगता यथा—

मुखजितश्चन्द्रः कपोलप्रतिबिम्बतयाऽनुप्रवेशं चक्रे।
जलमाधुर्यैर्जितश्चन्द्रः प्रतिबिम्बतया सरः सेवते स्म ॥ ३ ॥

इत्याद्यूह्यम्।

**सेवासुकृततः श्रेयोऽन्तरप्राप्तिर्द्विषज्जयः ।**

यथा । गतिजितो हंसो यद्भारतीपदसेवां चक्रे तेन सुकृतेन तज्जातिरपि मधुरशब्दाऽऽसीत् । मध्यजितः सिंहो यत्पार्वतीपदसेवां चक्रे तेन सुकृतेन स्वजातिराज्यमन्यैरनाक्रमणीयत्वं च लेभे । जितया कमलश्रिया कामिनीमुखाश्रयणेन निजरिपुश्चन्द्रोऽपि जीयते स्म । मुखजितचन्द्रेण स्फटिकादर्शच्छद्मना कामिनीमाश्रित्य स्वोदयेऽपि सदा विकासि सश्रीकं करच्छद्मकमलमधः क्रियते, मुकुलीक्रियते च ।

**वर्ण्यवस्तुनः स्पर्धापापेन सदृशं वस्तु सदूषणं कल्प्यम् ॥ ४ ॥**

यथा—मुखस्पर्धि कमलं स्पर्धोद्भवपापै राजप्रसादविकलं सकण्टकं च जातम् । यशःस्पर्धी चन्द्रः सकलङ्कः क्षयी च जातः ।

**सुकृतेऽपि सदोषता—**

यथा । वर्ण्यवस्तुनः स्पर्धापातकेन सदृशवस्तु सुकृतं कुर्वाणमपि सदूषणं स्यात् । यथा । मुखस्पर्धां कुर्वन् चन्द्रो महेश्वरं सेवमानोऽपि सकलङ्कोऽभूत् । मुखस्पर्धोद्भवैः पापैः कमलं हंसद्विजान् शरीरखण्डैरपि प्रीतान् कुर्वाणं सकण्टकं भवति ।

अथ तपसाऽर्थोत्पत्तिभेदाः ।

**स्यात्तपः स्वगतं छद्मगतं च प्रतिबिम्बगम् ।**

तपोविधिस्त्रिधा । आत्मनैव स्वयं कृतम्, सदृशवस्तुच्छद्मना वा कृतम्, जलादिषु प्रतिबिम्बतया वा कृतम् । त्रिविधमप्यग्रे उदाहरिष्यते ।

**वर्ण्यादिभिस्तपो वर्ण्यजितस्यैतत्फलाप्तये ॥ ५ ॥**

वर्ण्यजितस्य वस्तुनो वर्ण्यशोभाप्राप्तये वर्ण्यजयाय वा वनादिभिस्तपः कल्पनीयम् ।

स्वगतं यथा—

मुखजितं कमलं तच्छोभाप्राप्तये जलवासादि तपः कुरुते ।

छद्मगतं यथा—

मुखशोभाप्राप्तये चन्द्रो वने लताशाखावलम्बो कुसुमस्तबकच्छलेन तपस्तनुते ।

प्रतिबिम्बगतं यथा—

मुखलक्ष्मीलब्धये चन्द्रो रत्नभूमिप्रतिबिम्बतया शैलशिरसि तपस्तनुते । एवं सर्वभेदेषु त्रिविधत्वं बोध्यम् ।

**तपसा तत्पदावाप्तिः—**

जितस्य सदृशस्य तपसा वर्ण्यशोभाप्राप्तिः । यथा—

यत्कमलेनाकण्ठजले जलाहारेण तपस्तप्तं तेन नारीमुखसमानता लब्धा ।

यच्चन्द्रेण वने कुसुमस्तबकच्छलेन तपस्तप्तं तेन स्त्रीमुखलक्ष्मीर्लब्धा ।

यद्भृङ्गश्रेणिभिर्विष्णुपदाम्बुजे कान्तिधोरणीमिषेण सेवा कृता तेन नारीकटाक्षच्छटोपमा प्राप्ता ।

**दुःखावित्तवनाप्तिकः ।**

तपसाऽपि वर्ण्यलक्ष्म्या अप्राप्तौ जितं वस्तु दुःखचेष्टितानि कुरुते । यथा मुखजितं कमलं जलवासादिभिरपि मुखलक्ष्मीं न प्राप ततो भ्रमरारवैराक्रन्दं कुरुते । वेणीजिता भृङ्गश्रेणी वने मकरन्दास्वादमात्राशनाऽपि वेणीसाम्यं न प्राप ततः साक्रन्दा भ्रमति ।

**तेनापि न हि तत्प्राप्तिः—**

तपसाऽपि वर्ण्यशोभां जितं वस्तु न लभते । यथा कमलं जले आकण्ठ-लग्नं तपस्तेपे परं नारी वक्त्रोपमां न प्राप । हंसः सरस्वतीपदसेवां चक्रे परं नारीगत्युपमां न प्राप ।

**महत्प्राप्तिर्न तस्य तु ॥ ६ ॥**

तपसा महतोऽन्यस्य श्रेयसः प्राप्तिर्भवति न पुनर्वर्ण्यशोभाप्राप्तिः । यथा कमलं जलवासादिभिः श्रीपदं राजहंससेव्यं जातं न पुनः स्त्रीमुखोपमां लेभे । चन्द्रेण ज्योत्स्नादानैश्चकोरप्रीणनासुकृतैः शिवशिरसि पदं लब्धं न पुनः स्त्रीमुखोपमानम् ।

तदाप्तौ दुष्कृतं विघ्नः—

तपसा वर्ण्यलक्ष्मीप्राप्तौ जितवस्तुनः किञ्चिद्दुष्कृतं विघ्नः कल्पनीयम्। यथा। कमलं शम्भोरम्भोमूर्त्तेः सेवया मुखोपमामयास्यत्, चेन्नित्याश्रित-भृङ्गबन्धनं नाकरिष्यत्। विष्णुपदसेवासुकृतेन विष्णुपदी तत्कीर्तितुलनां प्राप्नुयाद्यदि नीचगमनं न कुर्यात्।

तदाप्तावपरं शुभम्।

तपसा वर्ण्यशोभाप्राप्तौ सदृशवस्तुनोऽन्यदपि श्रेयः सम्भाव्यम्। यथा कमलं जलवासादिभिर्मुखोपमां प्राप्य लक्ष्मीस्थानं राजहंससेव्यं च बभूव। जलवासादिभिः पाञ्चजन्यो नारीकण्ठोपमानं प्राप्य लक्ष्मीपतेरपि करारविन्दा-नुप्राप्तो बभूव।

श्रेयस्तदाप्तौ दोषेऽपि—

तपसा वर्ण्यस्योपमाप्राप्तौ सदृशवस्तुनः सदोषस्यापि श्रेयः कल्पनीयम्। यथा जलवासादिभिर्मुखोपमां प्राप्तं कमलं सकण्टकमपि देवशिरांस्यधिरोहति। विष्णुपदसेवया गङ्गा तत्कीर्तिसमतां प्राप्य नीचगामिन्यपि शिवशिरः संश्रया-सीत्।

तदाप्तौ नर्त्तनादिकम् ॥ ७ ॥

तपसा वर्ण्योपमाप्राप्तौ हर्षेण सदृशवस्तुनो नर्तनादीनि कल्पनीयानि। अमूनि यथा—

नृत्योत्कन्धरता स्मेरगौरवापोढपुष्टता।
आश्रितातिथिविप्राविधानं देवादिपूजनम् ॥ ८ ॥

यथा। जलवासादिना स्त्रीमुखोपमां प्राप्य कमलं वातचलितपत्रैर्नृत्यं रचयति। राज्ञः स्थैर्योपमां प्राप्य मेरुरुत्कन्धरोऽभूत्। गाम्भीर्योपमां प्राप्य जलधिः सर्वदिग्व्यापी बभूव। मतिसमतां प्राप्य बृहस्पतिर्देवगुरुतां गतः। सुकेशीकेशोपमां प्राप्य कलापी शिखाच्छलादापीडं धत्ते। स्थैर्योपमां प्राप्य गिरिः शिरःस्थमेघावलिव्याजान्मुकुटं धत्ते। राज्ञः स्थैर्योपमां प्राप्य मेरुः

स्थूलोऽभूत् । मुखशोभां प्राप्य चन्द्रः स्वाश्रितचकोरान् स्वेच्छया ज्योत्स्नापानं कारयति । मुखलक्ष्मीं लब्ध्वा कमलं हंसद्विजानतिथीन् भृङ्गानाहारदानैः प्रीणयति । मुखोपमां प्राप्य चन्द्रेण स्वकलया शिवपूजा कृता । एवं चले नृत्य-मुच्चे गर्वोत्कन्धरता, विस्तीर्णे स्मेरता, पूज्ये गौरवं, शिरःस्थवस्तुन्यापीडः, स्थूले पुष्टता, कल्पनीया । इत्याद्यनेकोल्लेखैरर्थः कल्पनीयः । अर्थोत्पत्तये प्रकारान्तरमाह—

**द्वेष्यस्याङ्गसुहृद्भङ्गैः—**

वर्ण्यवस्तुना जितो यः पदार्थस्तस्य वर्ण्यं तावद्द्वेष्यम् । ततो द्वेष्यस्य वर्ण्यस्य यान्यङ्गानि तेषां साम्येन सुहृद्रूपाणि यानि वस्तूनि तेषां जित-पार्श्वाद्भङ्गः कल्पनीयः । यथा नार्या कुचाभ्यां जितः कुम्भो नारीमुख-मित्राणि कमलान्युन्मूलयति । नार्या मध्यजितः सिंहो नारीनेत्रमित्राणि मृगकुलानि भिनत्ति ।

**अङ्गविद्वेषिपोषणैः ।**

द्वेष्यस्याङ्गानां समतया द्वेषिरूपाणि यानि वस्तूनि तेषां जितपदार्थ-पार्श्वात्पोषणं कार्यम् । यथा राज्ञा प्रतापजितो रविः राजयशोमित्रचन्द्रद्वेषिणं कमलानि सश्रीकानि कुरुते । राज्ञा यशोजितश्चन्द्रो राजप्रतापमित्ररविद्वेषिणः कैरवाणि विकासयति ।

**अङ्गद्वेषिद्विषत्पोषैः—**

द्वेष्याङ्गद्वेषिणां ये सुहृदस्तेषां जितपदार्थपार्श्वात् पोषो विधेयः । यथा । नार्या मुखजितश्चन्द्रः स्त्रीकटाक्षद्वेषिषट्पदश्रेणिप्रीतिदायीनि कैरवाणि विकासयति । नार्या गतिजितो हस्ती मुखद्वेषिकमलोपासकान् भृङ्गान् दानेन पुष्णाति ।

**अङ्गद्वेषिद्विषद्वधैः ॥ ९ ॥**

द्वेष्याङ्गद्वेषिणां यानि द्विषद्रूपाणि वस्तूनि तेषां जितपदार्थपार्श्वाद्वधो विधातव्यः । यथा । नार्या धम्मिल्लजितो राहुः स्त्रीमुखद्वेषिकमलद्वेषिणं, नारीकुचयुग्मद्वेषिचक्रयुग्मद्वेषिणं वा चन्द्रं पीडयति । नार्या वेणीजिता भृङ्गश्रेणी स्त्रीमुखद्वेषिचन्द्रद्वेषिकमलानि पदाघातैः पराभवति ।

**समानवस्तुनः शोभाचौर्यान्नाशोऽथ निग्रहः ॥ १० ॥**

वर्ण्याङ्गसदृशं यद्वस्तु तस्य वर्ण्याङ्गशोभाचौर्यं परिकल्प्य वनादिषु नाशो निग्रहो वा कल्पनीयः। यथा—मृगा नारीनयनशोभां हृत्वा वने नष्टाः। स्त्रीमध्यश्रियं हृत्वा सिंहो गिरिगह्वरे गतः। नारीमुखलक्ष्मीहरं कमलमिति राजहंसैः खण्डशः क्रियते। रात्रौ स्त्रीमुखलक्ष्मीं हरति चन्द्र इति प्रातःकालेन च्छिन्नकरः क्रियते।

**निपातायतनद्रव्यभङ्गप्राकारलङ्घनैः।**
**राजवेषासनस्थानविरुद्धादिनिषेवणैः ॥ ११ ॥**
**अगम्यगमनापेयपानकाभक्ष्यभक्षणैः।**
**अपह्नवाद्भवेद्दिव्यं प्रायश्चित्तं तदन्यतः ॥ १२ ॥**

दिव्यं यथा—

हृत्वाऽपि कान्तिधनमस्य नृपस्य कीर्त्ते-
दिव्यं सृजन्निव जगत्यपवादभीतः।
इन्दुः सुधावपुरपि प्रभुरोषधीना-
मप्येष लक्ष्ममिषसर्पभृतौ न शुद्धः ॥ ४ ॥

प्रायश्चित्तकरणं यथा—

समरे यत्करवालः पीत्वा मातङ्गकुम्भकीलालम्।
अनुतापीव व्रतयति रिपुनृपतीनां यशःक्षीरम् ॥ ५ ॥

अथ भ्रमप्रकारैरर्थोत्पत्तिर्यथा—

**स्वस्थादिभिर्भ्रमात् कार्यप्रवृत्तिः परिकल्प्यते।**

स्वस्थच्छद्मस्थप्रतिबिम्बस्थता पूर्ववत्। क्रमाद्यथा—

नलिनानि पानमधुभाजनानि नः
पिदधाति यः स विधुरेष गोचरः।
इति रोषणैरिव मधुव्रतैर्धुतं
सुदतीमुखं सुरभिचारुमारुतम् ॥ ६ ॥

ताटङ्कामुक्तमुक्तालिच्छलतस्तारकाततिः ।
निजभर्तृभ्रमेणेयं भेजे चन्द्रमुखीमुखम् ॥ ७ ॥
यत्र वैदूर्यवर्येषु कुट्टिमेषु तमीभ्रमात्
प्रतिबिम्बेन तद्भित्तौ पतिरापतति त्विषाम् ॥ ८ ॥

भ्रमकारिणोऽपि प्रतिबिम्बता यथा—

मणिनद्धेषु यत्सौधाङ्गणेषु प्रतिबिम्बितम् ।
शशाङ्कं कैरवभ्रान्त्या भजन्ते भृङ्गराजयः ॥ ९ ॥

**कार्यप्रवृत्तिरन्यत्र कारणप्रत्यये भ्रमात् ॥ १३ ॥**

यथा—

एकत्र क्वचिदेव देवसदने सम्प्रेक्ष्य साक्षात्कृत-
प्रद्योतं तपनीयकुम्भमुदयक्ष्माभृद्भृतार्कभ्रमात् ।
आश्लिष्यन्त्यनिशं निशास्वपि वियद्गङ्गारथाङ्गयो मिल-
द्भर्तृभ्रान्तिभृतः पयोगतनिजच्छायां विमुग्धाशया ॥१०॥

**कार्यप्रवृत्तौ भ्रमतः साफल्यं जायते क्वचित् ।**

यथा—

विधुमणिमयसौधप्राङ्गणे यत्र चन्द्र-
प्रतिमितिमतिफुल्लत्कैरवभ्रान्तिभाजः ।
असकृदमृतबिन्दुस्यन्दपानेन भृङ्गाः
प्रसृमरमकरन्दास्वादसौख्यं लभन्ते ॥ ११ ॥
यत्रोन्मुखं चातकवृन्दमभ्रभ्रमेण चैत्योत्थितधूपधूमे ।
वेल्लत्पताकाग्रगृहीतमुक्तनभोनदीबिन्दुभिरेति तृप्तिम् ॥ १२ ॥

**भ्रमात् कार्यस्य नैष्फल्ये भ्रमः सत्येऽपि वस्तुनि ॥ १४ ॥**

यथा—

आलिङ्गोच्चैः सुरगृहशिरःशातकौम्भीयकुम्भान्
भर्तृभ्रान्त्या निशि विफलिताः स्वर्गगङ्गारथाङ्ग्यः ।
अर्कालोकादुपगतमपि प्रीतिभाजं रथाङ्गं
मिथ्याबुद्धा सपदि न परीरब्धुमाराद् त्वरन्ते ॥ १३ ॥

**भ्रमात् कार्यस्य नैष्फल्ये सत्यप्यकरणं तथा ।**

यस्मिंश्चित्रपतत्पतत्रिपरुषोत्कर्षेण वेश्मान्तरे
मार्जारः परिजर्जरोऽजनि जवादाहृत्य सत्यभ्रमात् ।
तान् विन्दन्नभिजीवतोऽपि स पुनः प्राग्भङ्गभावादभि-
व्यक्तं मुक्तविरोधबोधविषयो लोकैः समालोक्यते ॥ १४ ॥

**भ्रान्तस्य वस्तुनोऽन्यत्वं जायते भ्रमतोऽन्यतः ॥ १५ ॥**

यथा—

चिक्रंसया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतनानाम् ।
मार्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृतिममेव मेने ॥ १५ ॥

**भ्रमज्ञातपदार्थस्य पूरणं च भ्रमान्तरात् ।**

यथा—

सङ्क्रान्तं प्रतिबिम्बमम्बरमणेः शुभ्राश्मवेश्माङ्गणे
यत्र प्रातरयत्नपूर्णकलशभ्रान्तिं विधत्ते तथा ।
कासारप्रसरत्सरोरुहपरीरम्भभ्रमेण भ्रमद्
भृङ्गश्रेणिरिहाश्रिता शितितलभ्रान्तिं यथा कल्पयेत् ॥१६॥

**नैष्फल्ये भ्रमतः कार्यप्रवृत्तेः साऽथ निश्चयात् ॥ १६ ॥**

यथा—

यत्र स्फुरत्स्फटिकनद्धगृहाङ्गणेऽर्क-
सङ्क्रान्तबिम्बमवलम्ब्य नितम्बिनीभिः ।
व्यर्थप्रयासकरणाच्चरणाग्रसङ्गा-
न्निश्चित्य सत्यकलशेऽपि किल प्रवृत्तम् ॥ १७ ॥

**भ्रान्तस्यापि भ्रमो यः स्याद्विज्ञेयोऽसौ प्रतिभ्रमः ।**

निद्रान्तेषु वने द्विषः सहचरीवक्षोरुहौ वीक्ष्य य-
द्युग्येभोन्नतकुम्भविभ्रमभयादार्तं रवं तेनिरे ।
तासु त्रासनिमित्तभित्तिवलितग्रीवासु वेगोल्लस-
द्वेणीदण्डविलोकनेन यदमि व्याशङ्क्य मूर्च्छामगुः ॥१८॥

वन्यो हस्ती स्फटिकघटिते भित्तिभागे स्वबिम्बं
दृष्ट्वा दूरात् प्रतिगज इति त्वद्द्विषां मन्दिरेषु ।
हत्वा कोपाकुलितरदनस्तत्पुनर्वीक्षमाणो
मन्दं मन्दं स्पृशति करिणीशङ्कया साहसाङ्कः ॥ १९ ॥

**अन्योन्यभ्रान्तिको भेदो यत्रान्योन्यं द्वयोर्भ्रमः ॥ १७ ॥**

यथा—

जम्बूनां कुसुमोद्गमे नवमधुन्याबद्धपानोत्सवाः
कीराः पक्वफलाशया मधुकरोश्चिन्वन्ति मुञ्चन्ति च ।
एतेषामपि जातकिंशुकदलश्रेणीसमानत्विषां
पुष्पभ्रान्तिभृतः पतन्ति सहसा चञ्चूषु भृङ्गाङ्गना. ॥२०॥
आरूढाः सङ्क्रमैर्यद्रिपुगृहशिखराण्यूर्ध्वमालोक्य भित्ति-
व्याघाताद्व्यर्थयत्ना दिवि जलदगजान्नैव हिंसन्ति सिंहाः ।
अश्रान्तं सोऽपि तत्र प्रतिकृतकमृगारातिनित्यावलोकात्
जीर्णातङ्को गजेन्द्रः सविधमपि भवन्नैव तेभ्यो बिभेति ॥२१॥

इत्याद्यनेकोल्लेखैर्भ्रमादर्थोत्पत्तिः कार्या ।

**वस्त्वन्तरक्रियारोपैः—**

वस्तुनि तद्विरुद्धवस्तुक्रिया चित्रार्थमारोप्यते । यथा—

इन्दुमुखी कुमुदाक्षी रम्भोरुः कमलचारुकरचरणा ।
अमृतद्रवलावण्याद्धृदयगता देवि किं दहसि ॥ २२ ॥
घनारिनारीनयनाश्रुनीरैर्यशोलता यस्य विभाति युक्तम् ।
प्रतापवह्निर्ज्वलितो यदेतैर्जगच्चमत्कारकरं तदेतत् । २३ ॥
शशिशुक्लाऽपि यत्कीर्तिश्चक्रेऽरिकुलकालिमाम् ।
पङ्काभमपि यन्मित्रौज्ज्वल्यं यद्वैरिदुर्यशः ॥ २४ ॥

**कार्यारम्भनिवृत्तिभिः ।**

कार्यारम्भात्पदार्थस्य केनापि कारणेन निवृत्तिः कल्पनीया । यथा—
भुवं भुजे योऽधितयाचकेभ्यो दिक्कुञ्जरान् दातुमना मनस्वी ।
तदेकयुग्यं भजतां प्रभुत्वं न दिक्पतीनां कृपयाऽहरत्तान् ॥ २५ ॥

**उपाध्यायात् प्रभोर्मित्रात् सेवकाज्जातिभावतः ॥ १८ ॥**

**सङ्क्रान्तद्‍गुणसङ्क्रान्तिः—**

यथा—

राजन् दानजितेव सेवनविधिं निस्त्रिंशलेखामिषा-
देषा कल्पलता प्रकल्प्य नियतं त्वत्पाणिपङ्केरुहान् ।
सङ्कल्पादिकदानकल्पनकलां वेत्ति स्म तस्माद्द्विषां
क्षोणीभोगसुखार्थिनां वितरति स्वर्भोगसौख्यान्यपि ॥२६॥

किन्त्वया शिक्षितं लक्ष्मि पितुः कल्लोलचापलम् ।
यत् त्वं नैकत्र कुत्रापि स्थिरत्वं प्रतिपद्यसे ॥ २७ ॥

**एतेभ्योऽपि न सा क्वचित् ।**

उपाध्यायादिभ्योऽपि सा तद्‍गुणसङ्क्रान्तिर्न स्यात् । यथा—

द्विजधनवर्जितमेतद्भवद्भवे यशसि किं न सङ्क्रान्तम् ।
सुकृतैकवेश्म यस्माद् द्विजराजश्रीर्हृताऽनेन ॥ २८ ॥

**आहारसदृशोद्‍गारद्युत्युद्भवविपर्ययैः ॥ २० ॥**

वस्तुनि औचित्यादाहारसदृशयोरुद्‍गारदेहवर्णयोरुद्भवः कल्पनीयः । क्वाप्याहारादेतयोर्विपर्ययः कार्यः । क्रमाद्यथा—

अतिलौल्यतः कवलयन् मलिनद्युति काननं किमपि दावशिखी ।
बहुभक्षणेन शितिधूममिषात्तनुते स्म भोजनवदुद्‍गिरणम् ॥ २९ ॥

द्विषन्मृगाक्षीनयनाञ्जनानि यदेष नित्यं कवलीकरोति ।
क्षितीश तेनाशनिसन्निभैव विभा विभाति स्म भवत्कृपाणे ॥३०॥

विपर्ययो यथा—

यद्वदन्त्यशनसन्निभमेवोद्‍गारमित्यनृतमत्र बभासे ।
गीतकं यदुद्‍गारि सुधावत्पीतसीधुभिरपि प्रमदाभिः ॥ ३१ ॥

सिच्यमानमपि शत्रुकामिनीकज्जलाविलविलोचनाश्रुभिः ।
आहृताऽसितमनोऽपि भासते श्वेतभानुसममेव यद्यशः ॥ ३२ ॥

**पदार्थानां मिथः साम्यं स्याद्वर्णोत्पत्तिकारणम् ।**
**अतः सदृशवस्तूनि सङ्गृह्यन्ते कियन्त्यपि ॥ २१ ॥**

वर्णाकारयोः सदृशपदार्था उक्ताः । अपरः प्रकीर्णकः सदृशवस्तुसङ्ग्रहः क्रियते । यथा—

तीक्ष्णानि प्रतिभास्त्राणि कक्षायाः सूचिका नखा ।
दात्रशल्लकशूलानि कुठारः क्रकचस्तथा ॥ ३३ ॥
असिपत्रद्रुपत्राणि शूलप्राजननेमयः ।
किटिदंष्ट्रा हलं सिंहनखरा मर्मभिद्वचः ॥ ३४ ॥
कुश्यङ्कुशकुशाग्राणि खड्गधारा च हीरकः ।
कर्त्तरी कर्तिकाटङ्काबिन्धनं नखभेदिनी ॥ ३५ ॥
महत्तमानि दिक्कालव्योमज्ञानेशकेशवाः ।
आरामः सन्मनोबुद्धिसमुद्रारण्यभूयमः ॥ ३६ ॥
शय्याऽरः पुलिनं श्रोणी कपाट. क्षेत्रवेश्मनी ।
सूक्ष्माणि कशसूच्यग्रत्रसरेणुरजःकणाः ॥ ३७ ॥
मनः सन्मतिसंसारस्वरूपपरमाणवः ।
मङ्गल्यानि दधिदूर्वाचन्दनाक्षतदीपिकाः ॥ ३८ ॥
रसालपिप्पलाशोकपत्राण्यब्जसुमं फलम् ।
शङ्खसिद्धार्थको सिद्धमन्नं मध्वाज्यमामिषम् ॥ ३९ ॥
रूप्यं ताम्रं मणिः स्वर्णभूषणान्यंशुकानि च ।
व्यजनं चामराश्छत्रं ध्वजो यानेभवाजिनः ॥ ४० ॥
ताम्बूलं गीतवादित्रगुरुबन्दिद्विजाशिषः ।
सुस्वप्नशकुने हंसचाषखञ्जनबर्हिणः ॥ ४१ ॥
अङ्गनास्फारशृङ्गाररूपा प्रेमवती प्रिया ।
श्रीवत्समत्स्यदर्पणभद्रासनवर्धमानवरकलशाः ॥ ४२ ॥
स्वस्तिकनन्द्यावर्त्ताविष्ट महामङ्गलान्याहुः ।
अमङ्गल्यानि घूकाहिकपोतशशकौतवः ॥ ४३ ॥
कृकलासो दुःशकुनं दुःस्वप्नं दुरुपश्रुतिः ।
कृतघ्नान्त्यजपाषण्डपतितारिविलापिनः ॥ ४४ ॥
नग्नच्छिन्नाङ्गरोगार्तदीनब्रह्मादिघातिनः ।
सम्मार्जनी खराजाङ्घ्रिरजो धूमश्वितोद्भवः ॥ ४५ ॥

छाया शाखोटकविभीतकयोर्मञ्चदीपयोः ।
पवित्राणीशबुद्धार्हद्विष्णुब्रह्मार्कतत्कराः ॥ ४६ ॥

पावकाम्भोमरुद्भूमिवेदवाणीयतिद्विजाः ।
पुरोधा धेनुरतिथिः सुवर्णं दर्भगोमये ॥ ४७ ॥

सत्यं सतां चरित्राणि पूज्यपादरजःकणाः ।
गङ्गा गोदावरी रेवा यमुना च सरस्वती ॥ ४८ ॥

कामरूपः कुरुक्षेत्रान्तर्वेद्यौ काशिपूस्तथा ।
सत्यः सीता दमयन्ती द्रौपद्यरुन्धती तपः ॥ ४९ ॥

ब्रह्मचर्यं हरिश्चन्द्रनलरामयुधिष्ठराः ।
अपवित्राणि रक्तास्थिशकृद्दुश्चरितान्त्यजाः ॥ ५० ॥

रजस्वला श्मशानोर्वीभस्माङ्गाराः शवानि च ।
कृतघ्नस्वामिविश्वासद्रोहि ब्रह्मादिघातिनः ॥ ५१ ॥

शरीरच्युतकेशाद्युच्छिष्टान्नर्द्धिककुक्कुराः ।
सुखदानि प्रियागीतनृत्यवाद्यादि नाटकम् ॥ ५२ ॥

आरामः सुमनोरामारामाविभ्रमकेलयः ।
सुखशय्या शशी दोला स्वातन्त्र्यं श्रीः सुतोद्भवः ॥ ५३ ॥

नष्टाप्तिः स्वस्पृहालब्धिर्वियुक्तप्रियसङ्गमः ।
दाता विद्वान् सुहृद्विद्या स्वर्गः पीयूषमप्सराः ॥ ५४ ॥

धर्मः सद्वचनं सन्तः सन्तोषज्ञानमुक्तयः ।
दुःखदान्याधिनरकौ काराव्याधिविरोधिनः ॥ ५५ ॥

कुभार्या नैस्वाकुग्रामवासाः कुस्वामिसेवनम् ।
कन्याबहुत्वं वृद्धत्वे पत्न्याः पुत्रस्य वा मृतिः ॥ ५६ ॥

बालत्वे मातृमरणं निवासः परवेश्मनि ।
दुर्लभे नीरसे स्नेहहीने पररते रतिः ॥ ५७ ॥

पारतन्त्र्यं परासक्ता पत्नी पुत्राश्च दुर्नयाः ।
वर्षाप्रवासौ द्वे पत्न्यौ कुभृत्योऽर्धहलः कृषिः ॥ ५८ ॥

कलङ्को निष्कलङ्कस्य मानिनो मानखण्डना ।
स्थिराणि पृथिवी शैलो धर्माधर्मौ सतां मनः ॥ ५९ ॥

सतीशीलं रणे धीरः प्रतिपन्नं महात्मनाम् ।
अस्थिराणि नदीपूरलहरीबिन्दुबुद्बुदाः ॥ ६० ॥
विद्युद्धूमस्फुलिङ्गोल्कानला दीपोऽनिलाहतः ।
मत्स्यः कपिध्वजौ सन्ध्या हस्तिपुच्छकरश्रुतिः ॥ ६१ ॥
कन्दुकश्रामशश्चक्रं दोलास्त्रीविभ्रमश्रियः ।
निमेषोन्मेषरसनानेत्राङ्गाघूंषि यौवनम् ॥ ६२ ॥
स्नेहशक्रधनुःस्वामिप्रसादस्वप्नदुर्जनाः ।
सवेगान्यायनिलेन्द्राश्वमनस्तार्क्ष्याऽश्वदृक्शराः ॥ ६३ ॥
नदी विमानहनुमन्तौ मीनोष्ट्रेणपक्षिणः ।
मन्दानि शनिः पङ्गुर्मुनिबालो नितम्बिनी ॥ ६४ ॥
खञ्जनः पुण्यपुरुषो हंसो वृषभहस्तिनौ ।
बलिष्ठानि शिवो विष्णुः स्कन्देन्द्रगरुडानिलाः ॥ ६५ ॥
श्रीरामहनुमद्भीमा बलदेवो बलिः पविः ।
सुदर्शनं सुरा दैत्याः पञ्चास्यशरभौ गजः ॥ ६६ ॥
महावराहदिग्दन्तिशेषकूर्मकुलाचलाः ।
पृथुरैरावतश्चक्री सतीस्वान्तं पुराकृतम् ॥ ६७ ॥
प्रतिपन्नं प्रतिज्ञा च महतां स्त्री जडा ग्रहाः ।
अबलिष्ठानि रोगार्तबालक्षुधितकातराः ॥ ६८ ॥
बलात्कृतानि कार्याणि नारी पापधनो नृपः ।
क्रूराणि सर्पमार्जारमकरव्याधपोत्रिणः ॥ ६९ ॥
हर्यक्षदुर्जनश्येनस्तेनप्रत्यन्तवासिनः ।
अक्रूराणि शिशुः साधुर्धार्मिको धर्मनन्दनः ॥ ७० ॥
सुस्वामिभृत्यमित्राणि तत्त्वज्ञा गौः सुगेहिनी ।
मधुरध्वनयो हंसमयूरपिकसारसाः ॥ ७१ ॥
कामिनी कुररः कङ्कोरपारावतालिनः ।
चातकः ककुहः केतुकिङ्किणी घर्घरावली ॥ ७२ ॥
वेदना हतनादश्च बालादिपदघर्घराः ।
वेणुवीणादिमञ्जीरमेखलाकङ्कणक्वणाः ॥ ७३ ॥

गन्धर्वाप्सरसौ हाहाहूहूतुम्बुरुकिन्नराः ।
गान्धारगायिनो हंसाः केकिनः षड्जकेकिनः ॥ ७४ ॥
कोकिलाः पञ्चमोल्लापाः क्रौञ्चा मध्यमराविणः ।
कलभा निषादरावा धैवतध्वनयो हयाः ॥ ७५ ॥
वृषभा ऋषभारावा विज्ञेयाः स्वरवेदिभिः ।
कठोररटिता घूकघरट्टकरभाः खराः ॥ ७६ ॥
मण्डूककोलकाकीलकपोताः कुक्कुरः शिवा ।
कपाटानां खटात्काराः शृङ्खलानिगडारवाः ॥ ७७ ॥

षट्पदी ।

महाशब्दा घनेन्द्रेभताक्ष्र्यपत्राब्धिवोचयः ।
अब्धिमन्थः शिवस्याट्टहासस्तु डमरुध्वनिः ॥ ७८ ॥
सिंहोष्ट्रहनुमद्रक्षः क्ष्वेडासाराविणो रवाः ।
नान्द्यब्धिकृष्णशङ्खौघमल्लदोःस्फालनध्वनिः ॥ ७९ ॥
निर्घातरथघोषज्याटङ्कारो गजवाजिनः ।
भटढक्काः शिखोद्धारस्फारनिर्झरघर्घराः ॥ ८० ॥
घण्टाश्चैत्यगजादीनां कन्दरादिप्रतिध्वनिः ।
वीराणां निनदो दूराकरणं रुदितारवः ॥ ८१ ॥
ततं वीणाप्रभृतिकं तालप्रभृतिकं घनम् ।
वंशादिकं तु सुषिरं विततं मुरजादिकम् ॥ ८२ ॥
एतच्चतुर्विधं वाद्यं बन्दो पञ्चारवो मतः ।
नान्दी द्वादशतूर्याणां निर्घोषो नाटकादिषु ॥ ८३ ॥
भम्भा मउन्द, मद्दल करडा, झल्लरं हुडुक्क कंसाला ।
भेरी तिलिमा वंसो सङ्खो, पणवोध नाडऐ नन्दो ॥ ८४ ॥
टुक्का ढक्का डमरु जकाहल बुक्क भेरि लाणयं पवुहो ।
जुग सङ्ख जरड योगा पमहल कंसाल रणे नन्दी ॥ ८५ ॥
सुगन्धानि तु कर्पूरकस्तूरीयक्षकर्दमाः ।
वासो मलयजं धूपोऽगुरुर्मीनमदो यशः ॥ ८६ ॥

सुगन्धितैलं स्वर्गद्रुपुष्पाणि कुसुमद्रुतिः ।
पद्मिनीस्त्रीमुखं मेघसिक्तोर्वी ग्रन्थिपर्णकः ॥ ८७ ॥
जातीपत्री लवङ्गैलाकक्कोलौ जातिकाफलम् ।
तज्जा तमालपत्राणि मद्यसप्तच्छदौ मदः ॥ ८८ ॥
शालयः कुसुमं जाती केतकी वकुलोऽम्बुजम् ।
पाटलाचम्पकौ मल्ली करुणी शतपत्रिका ॥ ८९ ॥
दुर्गन्धानि वपुःस्वेदकुथितान्नादिपूतयः ।
मृतस्नानादिदेहानि पुरीषापानमारुतौ ॥ ९० ॥
शिशिराणि सज्जनवचः प्रभुः प्रसादेष्टसङ्गसत्सङ्गाः ।
काव्ययशः सन्तोषाः सुधाम्बुहेमन्तहिमकराः करकाः ॥ ९१ ॥
उष्णानि तरणिर्वह्निर्बाडवः शिवभालदृक् ।
कालाग्निरुद्रगोविन्दचक्रब्रह्मानलास्त्रभाः ॥ ९२ ॥
वज्रं विद्युद्दवो ग्रीष्मः करीषाग्निर्हसन्तिका ।
आधिर्भ्राष्ट्रो ज्वरो धर्मः प्रतापो दुर्वचस्तपः ॥ ९३ ॥
क्षुद्दीपशापदुर्वासःक्रोधवैरिपराभवाः ।
सपत्नीष्टवियोगेष्टकृतावज्ञास्मरज्वराः ॥ ९४ ॥
कोमलान्यङ्गनाङ्गानि शिरीषं नवपल्लवाः ।
हंसरोमाणि कदलीस्तम्भाः पट्टांशुकान्यपि ॥ ९५ ॥
कठोराणि शिला शैलो वज्रं दुर्जनमानसम् ।
कुस्वामिभृत्यमित्राणि कुपत्नी शाकिनीमनः ॥ ९६ ॥
लोहं वैरिमनो हस्तौ नृहस्ततरुणीस्तनौ ।
कृतघ्नो नालिकेरीङ्गुदीकपित्थफलानि च ॥ ९७ ॥
मधुराणि विदग्धोक्तिकाव्यगीतप्रियाधराः ।
सुधामधुपयोनालिकेरीरसशशित्विषः ॥ ९८ ॥
द्राक्षाम्रदाडिमीरम्भाराजादनफलादिजाः ।
रसाः पुष्परसाः कीर्तिर्गुडखण्डेक्षुशर्कराः ॥ ९९ ॥
सुरा शिखरिणी मस्तु पायसं पानकानि च ।
कटूनि राजिका हिङ्गु तैलं [1]धत्तूरकास्तुहिः ॥ १०० ॥

---

१. धुत्तूरक इति पाठान्तरम् ।

विषं तुम्बीफलं निम्बेन्द्रवारुणगुडूचिकाः ।
क्षाराणि लवणं सौवर्चलं सैन्धवटङ्कणे ॥ १०१ ॥
यवक्षारः स्वर्जिकाजमूत्रं लवणवारिधिः ।
तिक्तानि मरिचं शुण्ठो सूरणं शृङ्गवेरकम् ॥ १०२ ॥
पिप्पलो पिप्पलोमूलमजमोदादयस्तथा ।
अम्लानि वोजपूराणि जम्बोरकरगाम्बिकाः ॥ १०३ ॥
आरनालकपित्थानि निम्बुकान्यम्लवेतसम् ।
द्रवाण्यमृतपानोयघृततक्रपयःसुराः ॥ १०४ ॥
तैलाम्रमकरन्देक्षुरसाः शिखरिणो मधुः ।
मषोमदाश्रुरुधिरमूत्रप्रस्वेदपारदाः ॥ १०५ ॥
अवश्यायाम्बुकर्पूरजलचन्द्रोपलद्रवाः ।
तेजस्विनो रविश्चन्द्रतारानिस्वर्णपारदाः ॥ १०६ ॥
नेत्र दन्तनखादर्शा रूप्यं कांस्याभ्रके मणिः ।
सूर्यन्दुकान्तखद्योतमुक्ताविद्रुमहोरकाः ॥ १०७ ॥
पद्मरागो मरकतं वैदूर्यं राजपट्टकः ।
सुरूपा मदनस्कन्दानिरुद्धनलकूबराः ॥ १०८ ॥
अश्विनोपुत्रनकुलनलदेवाः पुरूरवाः ।
दानिनः कामधुक्चिन्तामणिकल्पद्रुमावलिः ॥ १०९ ॥
जीमूतवाहनः कर्णदधोचिशिबिविक्रमाः ।
धन्विनः शिवकृष्णेन्द्रा भार्गवो रामलक्ष्मणौ ॥ ११० ॥
पार्थभीष्मकृपद्रोणद्रौणिकार्ण्वभिमन्यवः ।
आधाराः स्वर्नभोभूदिक्पातालाद्रिवनद्रुमाः ॥ १११ ॥
तीरग्रामपुरागारप्रासादाः शयनासने ।
पुर्योऽमरावती भोगावतो लङ्काऽलका तथा ॥ ११२ ॥
विदर्भा मिथिलाऽयोध्या कान्यकुब्जं कुशस्थलम् ।
कौशाम्बी त्रिपुरो काशो मथुरा हस्तिनापुरम् ॥ ११३ ॥
अवन्ती पाटलोपुत्रं चम्पा द्वारावती गया ।
विदिशा निषधा कोटीवर्षं काञ्ची तमालिनो ॥ ११४ ॥

माहिष्मती भृगुकच्छः काम्पिल्यं वाराणावतम् ।
राजानः पृथुमान्धातृधुन्धुमाराः पुरूरवाः ॥ ११५ ॥
हरिश्चन्द्रो भरतश्च कार्तवीर्ययुधिष्ठिरौ ।
मनुः काकुत्स्थसगरौ भगीरथनलौ रघुः ॥ ११६ ॥
अजो दशरथो रामकुशौ श्रेणिकसम्प्रती ।
विद्वन्नृपाः प्रतिष्ठाने शालिवाहनभूपतिः ॥ ११७ ॥
उज्जयिन्यां विक्रमार्कमुञ्जभोजनरेश्वराः ।
मन्त्रिणो वाक्पतिः शुक्रो जाम्बवान् माल्यवानपि ॥ ११८ ॥
सालङ्कायनकूष्माण्डश्रुतशीलास्तथोद्धवः ।
यौगन्धरायणौ मुद्राराक्षसश्रणकात्मजः ॥ ११९ ॥

॥ इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां काव्यकल्पलताकविशिक्षावृत्तौ अर्थसिद्धिप्रताने चतुर्थे प्रकीर्णकः पञ्चमः स्तबकः ॥ ५ ॥

## ॥ अथ चतुर्थप्रताने षष्ठः स्तबकः ॥

अथ सङ्ख्यातोऽर्थोत्पत्तिः कथ्यते ।

**औचित्यरचितैः संख्याबन्धबन्धुरितक्रमैः ।**
**उपमाद्यैरलङ्कारैः सुधीरर्थं समर्थयेत् ॥ १ ॥**

यदैकसंख्यः पदार्थो विवक्षितः स्यात्तदैकसंख्या अन्येऽपि पदार्थाः। यदा द्विसंख्यस्तदाऽन्येऽपि द्विसंख्याः । यदा त्रिसंख्यस्तथान्येऽपि त्रिसंख्याः। एवमन्येऽपि तत्संख्या अलङ्कारेण केनापि सङ्कलिताः काव्ये सङ्गृह्यन्ते । उदाहरणानि स्वस्वसंख्यया दर्शयिष्यन्ते । एकादिसंख्यासङ्ग्रहो यथा—

**आदित्यमेरुचन्द्रप्रासादा दीपदण्डकलशाश्च ।**
**खड्गहरनेत्रशेषस्वर्दण्डाङ्गुष्ठहस्तिकराः ॥ २ ॥**

**नासावंशविनायकवक्त्रपताकामनांसि शक्राश्वः ।**
**अद्वैतवाद एकैक एवामी सुकविभिर्वर्ण्याः ॥ ३ ॥**

यथा—

एकदन्ती जयत्येकदन्तस्तम्भं दधत्पुरः ।
यो वक्तीव जगद्विघ्नविघाताद्वैतमात्मनः ॥ १ ॥

**भुजदृष्टिकर्णपादस्तनसन्ध्यारामलक्ष्मणाः भृङ्गे ।**
**गजदन्तौ प्रीतिरतो गङ्गागौर्यौ विनायकस्कन्दौ ॥ ४ ॥**

**पक्षनदीतटरथधुर्यखड्गधाराश्च भरतशत्रुघ्नौ ।**
**रामसुतो रविचन्द्राविवत्येते द्वन्द्वगा वाच्याः ॥ ५ ॥**

उदाहरणम्—

किं भूचरौ तरणिशीतरुचो किमन्यौ
रामाच्युतौ किमु गणेशगुहाविहैतो ।
एतौ पुनः किमुदितौ रघुराजपुत्रा-
वित्याकुलंनृपकुलैः सहसैव दृष्टौ ॥ २ ॥

आश्लिष्यतामथ भुजाविव विक्रमस्य
मूर्तौ सभाग्रभुवमेकधनुर्भुवन्तौ ।
नत्वा कृते धनुषि सज्जगुणेऽर्जुनेन
भीमो मदादिदमुवाच भुवामधीशान् ॥ ३ ॥

प्रविष्टौ कुरुसैन्येषु द्रुतं भीमघटोत्कचौ ।
भक्ष्येषु सममेव द्वौ बालकस्य कराविव ॥ ४ ॥

पीड्यमाना दृढं ताभ्यां प्रियदोर्भ्यामिव प्रिया ।
सिस्वेद च चकम्पे च सम्मुमोह च सा चमूः ॥ ५ ॥

**भुवनवलिवह्निविद्यासन्ध्यागजजातिशम्भुनेत्राणि ।**
**त्रिशिरोमौलिदशाक्षेत्रपालफणकालमुनिदण्डाः ॥ ६ ॥**

**त्रिफलात्रिशूलपुरुषाः पलाशदलकालिदासकाव्यानि ।**
**वेदावस्थाः कम्बुग्रीवारेखा त्रिकूटकूटानि ॥ ७ ॥**

हरहृतपुरत्रियामायामा यज्ञोपवीतसूत्राणि ।
जैनेरत्नच्छत्रप्रदक्षिणागुप्तिशल्यानि ॥ ८ ॥
मुद्राप्रणामगौरवशिवभवमार्गाः शुभेतरा लेश्याः ।

सर्वेऽप्यमी त्रिसंख्योपेताः काव्ये निबद्धव्याः । यथा—

कण्ठोऽयमस्या मृदुमध्यतारस्वरत्रयाधार इति त्रिरेखः ।
मुदं ददाति त्रिजगज्जयाय प्रयाणशङ्खो मकरध्वजस्य ॥ ६ ॥
किं रोमराजीयमुनातटेऽस्या वलित्रिदण्डीं कलयन्ननङ्गः ।
कस्यापि रूपेण जितस्तपस्वी तमेव जेतुं तपते तपांसि ॥ ७ ॥
शल्येन धारितस्यासेर्धाराद्वितयबिम्बतः ।
त्रिमूर्तिरिव रेजेऽसौ त्रिवेदोवेदिजोर्चितुम् ॥ ८ ॥

ब्रह्ममुखवेदवर्णा हरिभुजसुरगजरदचतुरिकास्तम्भाः ॥ ९ ॥
सङ्घसमुद्राश्रमघातगोस्तनाश्रमकषायदिशः ।
गजजातियामसेनाङ्गवण्डहस्ता महाजने वणिजः ॥ १० ॥
दशरथपुत्रोपाध्यायध्यानकथाभिनयरोतिगोचरणाः ।
माल्यस्तवककराङ्गुलिसंज्ञासुरभेदयोजनक्रोशाः ॥ ११ ॥
एते सलोकपालाः काव्ये योज्याश्चतुःसंख्याः ।

यथा—

संसारिस्फुटरोषदोषपटलो खेलाय संश्लेषिणो
मार्गानुग्रतमप्रमादरजनोयामान्त्रिकामाक्षयान् ।
संसारोरुप्रधानपुरुषान् व्यामोहकारागृह-
द्वारप्राहरिकान् क्षिपन्ति चतुरः केचित्कषायत्विषः ॥ ९ ॥
वृकोदराद्याः सहसा मनस्विनः सहोदरास्तं परिवव्रिरे नृपम् ।
द्युहस्तिनो हस्तमिवासुहृद्गणच्छिदानिदानं रणपारदा रदाः ॥१०॥

स्मरबाणपाण्डवेन्द्रियकराङ्गुलीशम्भुमुखमहायज्ञाः ॥ १२ ॥
विषयव्याकरणाङ्गव्रतवह्निसुपार्श्वफणिफणाश्चैव ।
परमेष्ठिमहाकाव्यस्थानकतनुवातमृगशिरस्ताराः ॥ १३ ॥

**पञ्चकुलमहाभूताः प्रणामपञ्चोत्तरविमानाः ।**
**महाव्रतमरुद्वृक्षसमितिस्थानकानि च ।। १४ ।।**
**शरत्रभमस्य त्वेतानि बध्नीयात् पञ्चसंख्या ।**

यथा—

पञ्चेषुद्विपभेदपञ्चवदनः पञ्चव्रतस्वस्तरुः
स्वर्णाद्रिः समुदञ्चिपञ्चविषयव्यापारपङ्कांशुमान् ।
पञ्चाङ्गस्थितिमुक्तपञ्चमगतिः प्रस्थानपञ्चारवः
सेव्यः पञ्चसमित्पदादिनिलयः पञ्चेन्द्रियाणां जयः ।। ११ ।।
कर्णस्य सूनुर्वृषसेनवीरः शरप्रपातैः परिपीडितायाः ।
पञ्चेन्द्रियाणीव परध्वजिन्या द्राग् द्रौपदेयान् विधुरीचकार ।। १२ ।।

**रसरागव्रजकोणास्त्रिशिरोनेत्रान्तरारिगुणतर्काः ।। १५ ।।**
**दर्शनगुहमुखभूखण्डचक्रिणः स्युरिह षट्संख्याः ।**

यथा—

यस्योग्रमूर्त्तेः शरभूर्बभार षड्भिर्मुखैः षण्मुखतां प्रतापः ।
यत्कुण्डलानीव विरेजुरुच्चैश्चञ्चद्द्युतिद्वादशमण्डलानि ।। १३।।

**द्वापरविवाहपातालशक्रवाहमुखदुर्गतिसमुद्राः ।। १६ ।।**
**भयसप्तपर्णपर्णगोदावर्यस्स्वमी सप्त ।**

त्रैलोक्यालयसप्तनिर्भयभयप्रध्वंसलीलाजय-
स्तम्भी दुस्तरसप्तदुर्गतिपुरद्वारावरोधार्गलाः ।
प्रीतिप्रोक्षितसप्ततत्त्वविटपिप्रोद्भूतनूत्नाङ्कुराः
शीर्षे सप्तभुजङ्गपुङ्गवफणाः पार्श्वप्रभोः पान्तु वः ।। १४ ।।

**विश्वेशकुम्भिपालाः कुलपर्वतशम्भुमूर्तिवसवश्च ।। १७ ।।**
**योगाङ्गव्याकरणब्रह्मश्रुत्यहिकुलान्यष्टौ ।**

यथा—

अथावनीभारमुरीचकार जयातिरेकप्रवरो ययातिः ।
गीतं दिगन्तेषु यशो यदीयं श्रोतुं दधेऽष्टश्रुतितां विधाता ।।१५।।

**भूखण्डकृतरावणमुण्डसुधाकुण्डजैनपद्मानि ॥ १८ ॥**
**ग्रैवेयरसव्याघ्रीस्तनगुप्तिनिधिग्रहास्तु नवसंख्याः ।**

ख्याते यत्र नवग्रहार्त्तिरुदयं नायाति तत्त्वानि यो
व्याचख्यौ न च यस्य वाङ्नवसुधाकुण्डत्रपाकारिणो ।
नित्यं यत्पदपद्मयुग्मपुरतः पद्मानि देवा नव
व्यातेनुर्नवमो जिनः स जयति श्रीपुष्पदन्तप्रभुः ॥ १६ ॥

**रावणमुखाङ्गुलीचन्द्रवाहयतिधर्मशम्भुकर्णदिशः ॥ १९ ॥**
**अङ्गद्वारावस्थादशाः पुनः संख्यया दशैव स्युः ।**

यथा—

निजाश्रुनीरैः स्नपिता द्विषद्भिः प्रदीपिता मौलिमणीसृजाभिः ।
दशापि यत्पादनखाः समोर्युर्दिशां दशानामपि दर्पणत्वम् ॥ १७ ॥

**रुद्रास्त्रनेत्राण्यप्यङ्गोपाङ्गकानि जिनमतोक्तानि ॥ २० ॥**
**एकादश ध्रुवाः स्युस्तथा जिनोपासकप्रतिमाः ।**

यथा—

पार्श्वः सोऽस्तु मुदेन तस्य फणिनः सप्तास्यचूडामणी
सङ्क्रान्तः किल योऽष्टमूर्तिरजनि स्पष्टाष्टकर्मच्छिदे ।
यद्भक्तं दशदिग्जनव्रजमभित्रातुं तथा सेवितुं
यं यत्पादनखाविशत्तनुरभूदेकादशाङ्गोऽपि सः ॥ १८ ॥

**गुह्यनेत्रराशिमासाः सङ्क्रान्त्यादित्यचक्रराजानः ॥ २१ ॥**
**चक्रिबृहस्पतिहस्ताः सभासदो द्वादश भवन्ति ।**

यथा—

येन द्वादश सद्व्रतानि धनिनां ता द्वादशानुक्रमं
भिक्षूणां प्रतिमास्तथा निदधिरे सद्भावतो द्वादश ।
यश्च द्वादशकल्पवासवनिषेव्याङ्घ्रिर्भवे द्वादशेऽ-
ङ्गानि द्वादश सञ्जभौ जिनपतिः शान्तिः स वोऽस्तु श्रिये ॥१६॥

**प्रथमजिनभवा घोषा विश्वदेवास्त्रयोदश भवेयुः ॥ २२ ॥**

यथा—

आद्यो जिनः पातु जगन्ति यस्त्रयोदशक्रियास्थानविमुक् त्रयोदशे ।
जातो भवेत्तीर्थंकरः परं गुणस्थतद्गुणस्थानमगात् त्रयोदशात् ॥ २० ॥

**विद्यास्थानस्वरभुवनरत्नपुरुषान्वयास्वप्नाः ।**
**जीवाजीवोपकरणगुणमार्गणरज्जुसूत्रपूर्वभेदाः ॥ २३ ॥**
**कुलकरपिण्डप्रकृतिस्रोतस्विन्यश्चतुर्दश तु ।**

यथा—

यो गर्भाश्रयणे चतुर्दशशुभस्वप्नाभिसंसूचितो
योजन्माधिगमाच्चतुर्दशमहापूर्वाब्धिपारङ्गमः ।
यज्ज्ञानैकतटे चतुर्दशलसद्रज्जुप्रमाणोपमा
लोकाः किं तु चतुर्दशो जिनपतिः सोऽनन्तजित् पातु वः ॥ २१ ॥

**परमधार्मिकतिथयश्चन्द्रकलाः पञ्चदश भवन्तीह ॥ २४ ॥**

यथा—

तिथिं तिथिं प्रतिस्वर्गिभोग्यकैककलाधिका ।
कला यस्येशपूजाऽऽसोदेकः श्लाघ्यः स चन्द्रमाः ॥ २२ ॥

**शुक्रार्चिषः शशिकला विद्यादेव्यश्च षोडश भवन्ति ।**

यथा—

विधोः कलैका हरमूर्ध्नि भालमस्या वितेने विधिरेकया च ।
इति द्वितीयादिनिशासु दृश्या वृद्धौ कलास्तस्य चतुर्दशैव ॥२३॥

**सप्तदश संयमाश्चाष्टदश विद्याः पुराणानि ॥ २५ ॥**
**द्वीपाः स्मृतयो ज्ञाताध्ययनान्येकोनविंशतिमितानि ।**

यथा—

अष्टादशाध्यैष्ट सुधीः स विद्यास्त्वष्टादशद्वीपनृपान् विजिग्ये ।
दधौ च धर्मं स्मृतिभिः पुराणैर्विस्पष्टमष्टादशभिः प्रणीतम् ॥ २४ ॥

**करशाखाः श्रीभर्तुर्विशोपकाः सकलजननखाङ्गुल्यः ॥ २६ ॥**
**दशकन्धरनेत्रभुजास्तु संख्यया विंशतिर्वाच्याः ।**

यथा—

विंशत्या नयनैर्दोर्भिर्विंशत्या दशकन्धरः ।
पश्यन् श्लिष्यन् व्यधाद्बध्वाः स विंशतिगुणं सुखम् ।। २५ ।।

**कमलदलरावणाङ्गुलिशतमखजलधियोजनानि स्युः ।। २७ ।।**

**शतपत्रपत्रादिमजिनसुतधृतराष्ट्रनृपतिसुताः ।**
**जयमाला मणिहारस्रजोऽस्ररुक्कीचकाः शतप्रमिताः ।।२८।।**

यथा—

हस्तेन क्षेदिक्षितिपः शतघ्नी
सुदासघात्याः शतमित्यमर्षात् ।
स्थाप्याश्च पञ्चेति महीं महाङ्घ्रि-
घातेन चक्रेऽङ्गुलिघातचिह्नाम् ।। २६ ।।
पादाङ्गुलीभिर्युधि केऽपि केऽपि
कराङ्गुलीभिः परिचूर्णनीयाः ।
घात्या द्विषोऽमी शतमित्यमर्षात्
कृष्णासुतैः पञ्चभिरप्यभाषि ।। २७ ।।

**अहिपतिमुखगङ्गामुखपङ्कजदलरविकरेन्द्रनेत्राणि ।**
**विश्वामित्राश्रमवर्षार्जुनभुजसामवेदशाखाश्च ।। २९ ।।**
**पुण्यनरदृष्टचन्द्राः सहस्रसंख्या अमी ज्ञेयाः ।। ३० ।।**

यथा—

सहस्रपत्रपत्राणां प्रत्येकं स्मेरताकृते ।
सहस्रकरविस्तारं किं सहस्रकरोऽकरोत् ।। २८ ।।

एवमत्र ग्रन्थगौरवभयादसङ्कलिता अपि संख्याः काव्योपयोगाय प्रेक्षावद्भिः प्रेक्ष्याः ।

इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां
काव्यकल्पलताकविशिक्षावृत्तौ अर्थसिद्धिप्रताने
चतुर्थे संख्यास्तबकः षष्ठः ।। ६ ।।

## अथ चतुर्थप्रताने सप्तमः स्तबकः

**अथ समस्याक्रमः ।**

**कल्पादिसिन्धुलघुभिर्गुरुता ।**

लघोः पदार्थस्य कल्पादिकालेन सिन्धुना लघुभिश्च गुरुता विधेया । कल्पादिकल्पना यथा—

कल्पादिकाले गुरुदेहदेशा पिपीलिका राजति शैलतुल्या ।
तस्मिंश्च सत्यं धरणोधरोऽपि विगाहते देवगिरीन्द्रशोभाम् ॥ १ ॥

यतः कल्पादौ सर्वोऽपि पदार्थो गुरुतरो भवति, ततः सर्वत्रापि लघुपदार्थस्यौचित्येन कल्पादौ गुरुत्वमारोप्यम् । सिन्धुना यथा—

अहो पयोराशिविलासियादः पिपीलिका राजति शैलतुल्या ।
सदा जनानां महतां निषङ्गो दत्ते लघूनामपि गौरवाणि ॥ २ ॥

**यस्मात् ।**

**यावन्तो दृश्यन्ते नरकरितुरगादयः स्थले जीवा ॥ १ ॥**
**तावन्तः सलिलेष्वपि जलपूर्वास्तेऽपि निर्दिष्टाः ।**

ततः समुद्रस्थितानां लघूनामपि जीवानां गुरुत्वमस्त्येव । लघुभिर्यथा—

कुन्थुप्रमाणेन महत्तमाङ्गी पिपीलिका राजति शैलतुल्या ।
यस्माद्धोऽधः परिदर्शनेन सदा लघूनामपि गौरवाणि ॥ ३ ॥ इत्यादि ।

एवं रीतित्रयमध्याद् यत्र या या रीतिरौचित्येन घटते तया तया रीत्या सर्वत्रापि लघुपदार्थस्य गुरुताऽऽरोप्या ।

**युगान्तदूरावलोकगुरुभिर्लघुता विधेया ॥ २ ॥**

गुरुपदार्थस्य युगान्तेन दूरावलोकेन गुरुभिश्च लघुता विधेया । युगान्तेन यथा—

कल्पान्तकालनलिनीकृतदेहदेशः
शैलो बिभर्ति परमाणुसमत्वमेषः।
पूर्वं युगादिसमये बिभराम्बभूव
यो जातरूपधरणीधरसन्निभत्वम् ॥ ४ ॥

यतः कल्पान्ते सर्वे पदार्था लघवः सम्भवन्ति, ततः कल्पान्तेन गुरुपदार्थस्य लघुत्वमारोप्यम्। दूरावलोकनेन, यथा—

स्थूलोन्नतोऽपि परमाम्बरवर्तमान-
धावद्विमानचरखेचरकामिनीनाम्।
अभ्यागतो नयनवर्त्मनि सत्यमेव
शैलो बिभर्ति परमाणुसमत्वमेष ॥ ५ ॥

यतो दूरस्थितः पदार्थो गुरुरपि सूक्ष्म इव भासते। गुरुभिर्यथा—

कल्पान्तकालधरणीधरणप्रवृद्ध-
कोलाधिराजतनुमानविलोकनेन।
शैलो बिभर्ति परमाणुसमत्वमेष
नो कस्य लाघवमहो गुरुसन्निधाने ॥ ६ ॥

इत्यादिगुरुतरपदार्थैर्गुरुपदार्थस्य लघुता विधेया। एवं रीतित्रयमध्यादत्र या रीतिरौचित्याद् घटते तत्र तया रीत्या लघुता विधेया।

**नीरादिषु प्रतिशरीरवशेन युग्मम्।**

नीरदर्पणमणिभूमिप्रभृतिषु प्रतिबिम्बवशेन एकमपि वस्तु युग्मरूपं भवति। यथा—

पश्चिमाद्रेर्मणिशिरःक्रान्ते पूर्वाद्रिगे रवौ।
लोकैर्विशङ्क्यते किं भोः समुदेति रविद्वयम् ॥ ७ ॥

**कृष्णेन बिम्बितवशेन च वैपरीत्यम् ॥ ३ ॥**

अधोमुखीकृतकृष्णेन प्रतिबिम्बितेन वैपरीत्यं च कार्यम्। यथा—

कालियाहिग्रहव्यग्रे यमुनायां जगन्निधौ।
झम्पयाऽधोमुखे जाते विपरीतं जगत्त्रयम् ॥ ८ ॥

तडागो दर्पणप्रायजलसङ्क्रान्तितोऽभवत् ।
जलशय्यो कृतः कृष्णप्रासादः कलशोपरि ॥ ९ ॥

अस्ताद्रिमस्तकमणिप्रगुणक्षमाया-
मादर्शसन्निभरुचौ प्रतिबिम्बिताङ्गः ।
आशङ्क्यते दिनमुखे वरुणेन सोऽय-
मभ्युद्यतो दिनकरः खलु पश्चिमायाम् ॥ १० ॥

भूपाल तव यज्ञस्य धूमवर्तिरधोमुखो ।
पयोधिप्रतिमा भाति श्वभ्रपाविनयहेतवे ॥ ११ ॥

एवं रीतिद्वयमध्याद् यत्र या रीतिरौचित्याद्घटते तत्र तया रीत्या निर्वाहणोयम् । केनापि प्रपञ्चेन विपरीतीकृतेन तदुत्तरजगत्त्रयमध्यस्थितः सर्वोऽपि पदार्थो विपरीतो भणनोयः अस्यैव सूत्रकाव्यस्य प्रतिबद्धा समस्या, यथा—

कल्पादिसमये यस्मिन् कोटिका कुम्भिसन्निभा ।
कुम्भो पुनर्महाशैलस्पर्द्धिदेहाकृतिस्तदा ॥ १२ ॥
माहात्म्यं तस्य पाथोधेर्व्याख्यातुं कुत्र शक्यते ।
सापि यत्र बभौ तोयकोटिका कुम्भिसन्निभा ॥ १३ ॥
परमाणुतनोरग्रे कोटिका कुम्भिसन्निभा ।
कुम्भोन्द्राऽपि सुवर्णाद्रिमानतः कोटिकायते ॥ १४ ॥
युगान्तसमये यस्मिन् वारणः कोटिकासमः ।
तस्मिन् पिपीलिकामानं लक्ष्यतामिति न क्वचित् ॥ १५ ॥
महागिरिशिरःस्थानां वारणः कोटिकायते ।
महापर्वतमानेन वारणः कोटिकायते ॥ १६ ॥
साधुचित्तानुमानेन पर्वतः कोटिकायते ।
पूर्वाद्रौ रत्नभित्त्यन्तर्जाताद्रिप्रतिबिम्बतः ॥ १७ ॥
शङ्क्यते शक्रकान्ताभिः किमुदेति रविद्वयम् ।
यमुनाह्लदझम्पायामधोवक्त्रे जगन्निधौ ॥ १८ ॥
तदा सम्भाव्यते नूनं स्वर्गोपरि मही बभौ ॥ १९ ॥

**चन्द्रान्धकाररविकीर्तिकुकीर्तिसन्ध्या-**
**रागादिसङ्कुलवर्णविपर्ययेण । ॥ ४ ॥**

कृष्णरक्तपीतनीलादयो वर्णाश्चन्द्रेण श्वेताः क्रियन्ते । यथा—

पर्णोद्गमहिमद्योतद्योतिविद्योतितोऽभितः ।
कैलासगिरिसङ्काशः काशते विन्ध्यभूधरः ॥ २० ॥

जपापुष्पं जातिसुमं सुवर्णं रजतप्रभम् ।
सुधाकरकरस्पर्शान्मषी चन्दनवद्बभौ ॥ २१ ॥

रक्तपीतश्वेतादयो वर्णा अन्धकारेण कृष्णाः क्रियन्ते । यथा—

कैलासो विन्ध्यसङ्काशः कर्पूरः कज्जलप्रभः ।
जपा तापिच्छगुच्छश्रीरन्धकारैर्विनिर्ममे ॥ २२ ॥

कृष्णश्वेतादयो वर्णा बालार्केण सन्ध्यार्केण रविणा वा रक्ताः क्रियन्ते । यथा—

कज्जलं कुसुमच्छायं जातीपुष्पं जपासुमम् ।
सुवर्णं पद्मरागञ्च प्रभातार्कप्रभावृतम् ॥ २३ ॥

अनया रीत्या सर्वत्राप्यौचित्येन वर्णविपर्ययः क्रियते । यदि पुनश्चन्द्रान्धकाररवीणामिव वर्णविपर्ययः क्रियते तदा कीर्त्तिकुकीर्त्तिसन्ध्यादिभिरेतेषामेव वर्णविपर्ययः क्रियते, यदाऽन्यवस्तूनामपि चन्द्रादिभिरेव तैर्वर्णविपर्ययः क्रियते । यथा—

स्वर्धुनीसलिलसन्निभस्फुरत्तावकीननवकीर्तिमण्डलैः ।
विस्तृतैस्त्रिजगति क्षमापते शीतरश्मिरिव वीक्ष्यते रविः ॥ २४ ॥

अन्यवस्तूनां यथा—

मेदिनीदयित तावकैर्भृशं सद्यशः समुदयैः समुच्छ्रितैः ।
क्षीरनीरनिधिसोमकोमलैः कज्जलं रजतसन्निभं बभौ ॥ २५ ॥

हिमाद्रिसदृशो मेरुकुङ्कुमं शशिसन्निभम् ।
भूमीधव भवत्कीर्त्या शोभिते भुवनत्रये ॥ २६ ॥

कुकीर्त्या, यथा—

भूमिपाल भवदीयविद्विषन्मेदिनीपतिकुकीर्तिपङ्क्तिभिः ।
प्रावृषेण्यजलवाहकान्तिभिः श्यामलो जयति यामिनीपतिः ॥२७॥

अन्यवस्तूनामपि यथा—

मेदिनीदयित तावकद्विषत्संविसारिकुयशःकदम्बकैः ।
अन्धकारनिकरैरिवोदितैः कुङ्कुमं जयति कज्जलोपमम् ॥२८ ॥

हिमाद्रिर्विन्ध्यबन्धुश्रीः स्वर्णं मरकतप्रभम् ।
महीधव तव द्वेषिकुकीर्तिप्रसरैर्बभौ ॥ २९ ॥

सन्ध्यया वर्णविपर्ययो यथा—

पूर्वभूधरशिरस्तटीगतः सान्ध्यरागपटलैः परावृतः ।
प्रेक्ष्यतेऽत्र रजनीमुखेऽधुना विद्रुमप्रतिमदीधितिर्विधुः ॥ ३० ॥

अन्यवस्तूनां यथा—

कान्तकोपपरवामलोचनालोचनान्तविततारुणद्युतौ ।
सान्ध्यरागपटले सति क्षणं कज्जलं भवति कुङ्कुमोपमम् ॥ ३१ ॥

स्वर्णं सिन्दूरपूरश्रि कर्पूरं पद्मरागरुक् ।
जपाकुसुमसङ्काशैः सन्ध्यारागभरैरभूत् ॥ ३२ ॥

**अथ वर्णान्तरसङ्गाद्वस्तूनां वर्णविपर्ययः क्रियते ॥ ५ ॥**

यथा—

शशिमुकुटललाटे शैलजागण्डपाली-
विगलितमृगनाभिव्यक्तघर्माम्बुसिक्तः ।
समजनि नरकारिश्यामलो यामिनीशः
श्रयति मलिनसङ्गात् कश्मलत्वं न को वा ॥ ३३ ॥

मसृणघुसृणपङ्कप्रक्रियाप्राग्रजाग्र-
त्कुचकलशविलासैः कम्बुकुन्दोज्ज्वलोऽपि ।
समरुणदरुणत्वं कामिनीकण्ठहारी
जगति भवति रागो रागिसङ्गान्न कस्य ॥ ३४ ॥

क्षितिधरपतिपुत्रीमौक्तिकव्यक्तिभङ्गी-
निलयवलयमालाकान्तिजालावलीढः ।
हिमरुचिरुचिरासीन्नीलकण्ठस्य कण्ठो
भवति विमलयोगान्निर्मलत्वं न कस्य ॥ ३५ ॥

एवमनया रीत्या सर्वत्राप्यूह्यम् ।

धर्मध्यानव्यसनरसिका स्पष्टमष्टाब्दयोगात्-
केयं बाला पतितदशना पाण्डुरीभूतकेशा ।
भक्तिव्यक्तप्रणतशशभृत्पादजाग्रन्नखाग्र-
ज्योतिर्जालैस्त्रिदशतटिनीनीरधिक्कारधीरैः ॥ ३६ ॥

रङ्गेऽस्मिन् रङ्गदभ्रंलिहगृहवलभीकर्यवैदूर्यनिर्य-
ज्ज्योतिर्जातप्रयाताद्युतिकरविधुरीभूतशोभा विभूतिः ।
कालिन्दीकालकान्तिः समजनि रजनीजीवितव्याधिनाथो
ऽतो को वा कलावानपि न हि मलिनासङ्गतः कश्मलत्वम् ॥३७॥
अहो राहुग्रहग्रस्तसमस्तोज्ज्वलमण्डलः ।
इन्दु कज्जलबिन्दुश्रीर्हानिः कस्य न विप्लवे ॥ ३८ ॥

एवं सर्वत्रापि सङ्गवशाद्वर्णव्यतिक्रमो विधेयः ।

**दृष्टान्तवद्वयदिशब्दतया इति ।**

द्वितीयवस्तुनिदर्शनं दृष्टान्तः । तद्वस्तुस्वभावादन्यस्मिन्नर्थे यदिशब्दे यदिशब्देन संयुज्यते । समस्या पूर्यते, यथा—

प्रतीच्यां यदि मार्तण्डः समुदेति स्फुरत्करः ।
तदा सञ्जायते नूनमग्निस्तुहिनशीतलः ॥ ३९ ॥

एवं सर्वत्र । पुराणैरिति । पुराणमुनिराजचरितैः समस्या पूर्यते । यथा—

अगस्तिमुनिनिष्पीतनिःशेषजलमण्डलात् ।
अहर्पतिमहःशुष्कात्समुद्राद्धूलिरुत्थिता ॥ ४० ॥

इति चिन्तनीयम् ।

**वात्सल्यशोकमधुघातवियोगमादैः ॥ ६ ॥**

वात्सल्येन समस्या पूर्यते । यथा—

अतुच्छसुतवात्सल्यपिच्छलीभूतचेतसा ।
सोममूर्तिः क्षमो व्याघ्रो जनन्या मन्यते ध्रुवम् ॥ ४१ ॥

इत्याद्यूह्यम् । शोकेन, मधुना, घातेन, उन्मादेन समस्या पूर्यते । यथा—
यतः शोकवियोगमादैर्भ्रान्तः पुमानघटमानमपि जल्पति ।

**स्वप्नेन्द्रजालिकमतिभ्रमचित्रमाया-**
**मन्त्रौषधीमणितपःपदभङ्गभावात् ।**
**शीर्षाग्रवाञ्छितमनोगतिपुण्यदेव-**
**प्रश्नोत्तरव्यस्तसमासविभिन्नसाम्यात् ॥ ७ ॥**

स्वप्नेन समस्या सिद्ध्यति । यतः स्वप्नेऽघटितमपि सर्वं घटते । यथा—

निद्रामुद्रापरिचयलवान्मुद्रितानन्तचिन्ता
चित्ते चित्ते निभृतममृतज्योतिषि म्लानधाम्नि ।
प्रातः स्वप्नेऽरुणकपिशितं प्राग्दिशैकोऽथ कस्मा-
दाकाशस्थं जलचरपदं दृष्टिहीनो ददर्श ॥ ४२ ॥

अहो ज्योतिष्कलादक्ष मया स्वप्नेऽमुकं दृष्टं त्वं विचारयेत्यादि कल्पयनीम् । इन्द्रजालेनाघटमानमपि सर्वं घटते । तथा मतिभ्रमेणापि सर्वं घटते । चित्रे विसदृशमपि लिखितं सम्भवति । अहो चित्रकृदीदृशं चित्रं चित्रयेति वाक्यं रचनीयम् । माययाऽपि विसदृशं सम्भाव्यम् । मणिमन्त्रौषधिप्रभावेण सर्वं साध्यते । यस्मादचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः । तपसाऽपि सर्वं साध्यते ।

"यद्दूरं यद्दुराराध्यं यच्च दूरे व्यवस्थितम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम्" ॥ ४३ ॥

इति तपसाप्यघटमानं सर्वं घटते । पदभङ्गभावादपि समस्या पूर्यते, यथा—'मृगात्सिंहः पलायते' । मृगमत्तीति मृगात् सिंहविशेषणम् । पलाय मांसाय ते तव । अयं मृगः समायाति मृगात् सिंहः पलाय ते । ततो वेगात् पलायस्व त्वरितं त्वरितैः पदैः । इत्याद्यूह्यम् । शौर्योष्मणा वाञ्छितेन मनोगत्या पुण्येनाघटमानमपि घटते । देवप्रसादे नासाध्यमपि साध्यते ।

निःश्रीकोऽपि विभो विभातसमये पश्यत्यवश्यं मुदा-
यस्ते पद्मसमानमानमनसो स्यादिन्दिरामन्दिरम् ।
श्रीवामेय किमु स्तुमस्तव परं यस्य प्रसादाद्भुतै-
र्मूको जल्पति संशृणोति बधिरः पङ्गुर्नरो नृत्यति ॥४४॥ इत्यादि ।

प्रश्नेन समस्या पूर्यते । यथा—

कस्तूरी जायते कस्मात् को हन्ति करिणां कुलम् ।
किं कुर्यात् कातरो युद्धे 'मृगात्सिंहः पलायते' ॥ ४५ ॥ इत्यादि ।

**क्षयसमासविभिन्नमाध्यात् ।**

समस्यायां यत्साध्यं पदं भवति तत् क्षयसमासेन विभिन्नं क्रियते सर्वापि समस्या सिध्यति । यथा—

कर्पूरपूरच्छविवादविद्यासंवावदूकद्युतिशुभ्रिताभ्रे ।
इन्द्रोर्नृपद्वेषितमोवितानसूर्योदये रोदिति चक्रवाकी ॥ ४६ ॥

सूर्यं यावन्नृपसम्बोधनम् ।

**श्रीहट्टकेश्वरजगत्प्रलयग्रहास्त-**
**पाथोधिमन्थसमयप्रतिबिम्बभावैः ।**
**सङ्ग्रामचक्रिपुरचन्दनशस्त्रपातै-**
**श्चण्डीशसद्मगुरुताऽपि रथोपमानैः ॥ ८ ॥**

एकैकभुवनेऽन्यभुवनानामवतारः । पूर्वं पाताले श्रीहट्टकेश्वरस्वामिनमस्कारेण स्वर्लोकावतारः । जगत्प्रलयेन मर्त्यलोकावतारः ग्रहास्तेन नभोलोकावतारः । यथा—श्रीहट्टकेश्वरस्वामिनमस्करणकारणात् । सुरेन्द्रादिभिरायातैः । स्वर्गः पातालमाययौ ।

कदाचिच्चारभेदेन क्रमादस्तमुपागतैः ।
ग्रहैः सम्भाव्यते नूनं पातालं प्रययौ नभः ॥ ४७ ॥

अथ पृथिव्यां पाथोधिमन्थनसमयेन स्वर्गपातालयोरवतरणम्, प्रतिबिम्बभावेन नभोलोकावतरणं विधेयम् । यथा—

समुद्रमथनारम्भे मिलितैरमरादिभिः ।
पृथिव्यां स्वर्गपाताले दृश्येते स्फुटमागते ॥ ४८ ॥

दर्पणप्रतिमोल्लासिजलपूरसरोवरे ।
प्रतिबिम्बच्छलादेतद्भुवि व्योम समागतम् ॥ ४९ ॥

अथ नभसि सङ्ग्रामेण स्वर्गस्य हरिश्चन्द्रचक्रिपुरेण मर्त्यलोकस्य चन्दनशस्त्रपातैरहिलोकस्यावतरणं विधेयम् । यथा—

रणप्रवणवीराणां विलोकनकुतूहलात् ।
समायातैः सुरेन्द्राद्यैः स्वर्गो नभसि दृश्यते ॥ ५० ॥

आकाशान्तरसञ्चारिहरिश्चन्द्रपुरीच्छलात् ।
भौमस्य मिलनायेव जगाम जगतीं नभः ॥ ५१ ॥

श्रीरामरावणरणे कपिमण्डलेन
शस्त्रीकृतैर्मलयजद्रुमचक्रपालैः ।
रिङ्गद्भुजङ्गमकुलैः परितः स्फुरद्भिः
सम्भाव्यते नभसि सर्पपुरं प्रसर्पत् ॥ ५२ ॥

अथ स्वर्गे चण्डीशाभरणरूपेण भुजङ्गमलोकस्य सद्मगुरुताभिर्मर्त्यलोकस्यावतरणं विधेयम् । नभोलोकस्तत्रैवासोद्यथा—

श्रीकण्ठकण्ठदोर्दण्डमण्डनैरहिमण्डलैः ।
अयं भुजगलोकोऽपि स्वर्लोककलिताश्रयः ॥ ५३ ॥
अभ्रंलिहगृहव्यूहचन्द्रशालाविलासिभिः ।
नरनारीगणैर्मन्ये मर्त्यलोको द्युलोकगः ॥ ५४ ॥

उपमानैः समस्या पूर्यते । उपमानानि सदृशवस्तूनि । यथा—

जन्मस्तोत्रे जिनेशस्य मेरौ देवाङ्गनामुखैः ।
परितः स्फुरतैः शङ्के शतचन्द्रं नभस्तलम् ॥ ५५ ॥ इत्यादि ।

तद्गुणाधिक्येनेति चतुःश्लोकोपरि शेषपदम् । पदार्थस्य गुणादधिकगुणपदार्थेन समस्या पूर्यते । यथा—

त्रैलोक्ये स्फुरतः शुभ्रयशसः पुरतस्तव ।
सोऽपि विश्वम्भरानाथ सोमः श्यामवपुर्बभौ ॥ ५६ ॥

तद्गुणाधिकं यशः ।

त्वद्गाम्भीर्यगुणस्याग्रे समुद्रो गोष्पदायते ।
सन्मानससरोजान्तर्गगनं भ्रमरायते ॥ ५७ ॥

एवमौचित्येन तद्गुणाधिकत्वमारोप्यम् ।

॥ इति श्रीजिनदत्तसूरिशिष्यमहाकविपण्डितश्रीमदमरचन्द्रविरचितायां काव्यकल्पलताकविशिक्षावृतावर्थसिद्धिप्रताने चतुर्थे समस्यास्तबकः सप्तमः सम्पूर्णः ॥ ७ ॥

श्रीमद्वायडगच्छवारिधिविधोः पादारविन्दद्वये
येन श्रीजिनदत्तसूरिसुगुरोः भृङ्गारभृङ्गायितम् ।
स श्वेताम्बरमौलिरत्नममरः श्रीवीरतीर्थङ्कर-
प्रह्वात्माऽकृतकाव्यकल्पलतिकावृत्तिं सतां सम्मताम् ॥९॥

सिक्तेयमुद्धृतैः शास्त्राब्धिभ्यः सारसुधारसैः ।
काव्यकल्पलताऽऽकल्पं तनोतु सुमनो मुदम् ॥ १० ॥

काव्यमेव परब्रह्मास्वादसोदरशर्मदम् ।
आलोकं पालयामास कालिदासकवेर्यशः ॥ ११ ॥

वाल्मीकिव्यासयोर्विश्वे विश्वविड्मूलकूलगा ।
कल्पान्तोल्लङ्घिनी कीर्तिः काव्यादेव विजृम्भते ॥ १२ ॥

॥ सम्पूर्णश्चायं चतुर्थोऽर्थसिद्धिप्रतानो ग्रन्थश्च ॥ ४ ॥

वन्दामहे मुदा शैवचण्डकोदण्डखण्डनम् ।
जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥

॥ श्रीसङ्कष्टनाशिनौ विजयतेतराम् ॥

॥ शुभं भवतु ॥



## परिशिष्टम्-१

## काव्यकल्पलतावृत्तौ समुदाहृतनिदर्शनश्लोकानामनुक्रमणी

